# KIṄKINĪMĀLĀ

(First Series)

(A collection of shorter poems)



BY

Y. MAHALIṄGA SĀSTRI, M.A. B.L.,

Advocate

॥ श्रीरस्तु ॥

# ॥ किङ्किणीमाला ॥

## प्रथमो गुम्फः

लघीयसा
विचित्रविषयाणा
खण्डकाव्याना समाहारः



श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य चतुरधिक-
शतप्रबन्धनिर्वाहक श्रीमदप्पय्यदीक्षितेन्द्र वंशमुक्ताफलानां,
राजुशास्त्र्याख्याविख्यात महामहोपाध्यायश्रीत्यागराज-
मखिराजानां प्रपौत्रस्य, महोपदेशक-शास्त्ररत्नाकरादि-
बिरुदाञ्चित पण्डितप्रकाण्डश्रीयज्ञेश्वरकविसूनोः
श्रीमन्महालिङ्गकवेः कृतिः



१९३४
॥ मूल्यं रूप्यद्वयम् ॥

CONTENTS.


| | |
|---|---|
| Foreword | ix—x |
| किङ्किणीमालायां काव्यानुक्रमसूची | xi—xiv |
| अर्पणम् | 1 |
| मङ्गलम् | 2 |
| किङ्किणीमाला | 3—102 |
| Appendix A: *Poems which are Translations* | iii |
| " B: A note on the Song poems | iv—vi |
| " C Particulars of contributions by Patrons | vii |
| " D *List of other works to be published next* | viii |

## FOREWORD

In November 1931, it occurred to me that I might collect together my Shorter Poems—variously scattered—into one volume of presentable size. When I set myself to the task, I found that there were too many answering to the description. I have therefore, selected the more essentially lyrical ones from among them in order to form the First Series of the *Kuṅkumī-Mālā*. The poems included in this collection bear several dates ranging from 1918 to 1933.

I owe the publication of this volume to the kind help rendered by His Holiness the Jagadguru of the Kāmakōṭipīṭha and the following esteemed gentlemen:- (1) M. R. Ry. K. S. Nārāyaṇasvāmi Aiyar Avl, Mirāsdār, Mudikondāṇ; (2) M. R. Ry., K. V. Rāmasvāmi Aiyar Avl, Advocate, Madura; (3) M. R. Ry. K. S Rāmasvāmi Śāstri Avl., Retired District Judge, Madras; (4) M. R. Ry. R. Kṛṣṇasvāmi Sāstri Avl., Sub-Registrar, Tanjore. (5) M. R. Ry. A Sāmbamūrti Aiyar, Avl, Retired Judge, Kālati; and (6) M R. Ry. R. Nārāyanasvāmi Aiyar Avl, Proprietor, M L. J Press, Mylapore. Particulars of their contributions are given in Appendix C.

It is my fervent hope that the *Kiṅkiṇī-mālā*, having once stepped into light, will plead before a sympathetic and enlightened public for the speedy release of "her sisters" still under lock and key. In furtherance of this object, I beg to announce that every purchaser of the *Kiṅkiṇī-mālā* will be contributing to a *fund*, to be called the *Kinkiṇī-mālā-nidhi*, which I mean setting apart for the publication of a few more works of mine mentioned in Appendix D.

In Appendix A, mention is made of Poems which are Translations. Appendix B is a note on the Song-poems.

I take this opportunity to express my sincere feelings of gratitude to Brahmaśrī S K. Padmanābha Śāstri, and Brahmaśrī C. Śāṅkararāma Śāstri for having assisted me in reading through the proofs for the press, and to Brahmaśrī Mahāmahopādhyāya Professor S Kuppusvāmi Śāstri, for having offered several valuable suggestions over the final proofs

3. Mādhavapuram,<br>Mylapore, Madras.<br>28th January, 1934. Y. MAHĀLINGA ŚĀSTRĪ.

## ॥ किङ्किणीमालायां काव्यानुक्रमसूची ॥


| विषयः | पृष्ठम् |
| --- | --- |
| अर्पणम् । | १ |
| मङ्गळम् । | २ |
| I | |
| गणेशगीतम् । | ३ |
| षण्मुखभूषणम् । | ४—५ |
| शिवपञ्चचामरम् । | ६ |
| शिवनमस्कारः । | ६ |
| शिवगीतम् । | ७ |
| शम्भुस्तुतिः । | ८ |
| शारदागीतम् । | ९ |
| जन्मभूमिप्रशस्तिः । | १० |
| II | |
| नायिकाप्रणयः । | ११–१२ |
| सज्जिकाविप्रलम्भः । | १३–१६ |
| मारतूणीरः । | १७–२१ |
| जलदमालिनी । | २२–२३ |
| प्रेयसीस्मृतिः । | २४–२५ |

| विपय | पृष्ठम् |
|---|---|
| विरहिवैक्लव्यम् । | २६ |
| राघवविलाप । | २७–२९ |
| III | |
| कृष्णलीलागीतम् । | ३० |
| स्थाणुपरिदेवनम् । | ३१–३४ |
| IV | |
| आकाशतारा । | ३५–३६ |
| प्रभातवेला । | ३७ |
| जलदागम । | ३८–३९ |
| अम्बुवाह । | ४०–४३ |
| V | |
| कोकिलगीतम् । | ४४–४५ |
| सुवर्णपञ्जरम् । | ४६–४८ |
| चन्द्रोपरागपञ्चकम् । | ४९–५० |
| पेचकपञ्चकम् । | ५१–५२ |
| कीचकपञ्चकम् । | ५३–५४ |
| पल्वलपञ्चकम् । | ५५–५६ |
| पन्नगपञ्चकम् । | ५७–५८ |
| कुक्कुटपञ्चकम् । | ५९–६० |

| विषयः | पृष्ठम् |
|---|---|
| VI | |
| वयोऽधिरोहनिश्रेणिका । | ६१–६२ |
| जीवयात्रा । | ६३ |
| जीवनजुगुप्सा । | ६३ |
| आप्तोपदेशः । | ६४ |
| ज्ञानसेनस्य लेखः । | ६५–६६ |
| शूतकरनिर्वेदः । | ६७–७० |
| साक्षात्कारपद्यकम् । | ७१–७२ |
| VII | |
| रामायणमहामहाष्टप्रासस्तवः । | ७३–७८ |
| VIII | |
| आचार्यपद्यरत्नम् । | ७९–८० |
| ग्रन्थसमुच्चयपद्यकम् । | ८१–८२ |
| कालिदासप्रशस्तिः । | ८३–८५ |
| आर्जवपद्यकम् । | ८६–८७ |
| IX | |
| नानिकापद्यकम् । | ८८–८९ |
| कौण्डिन्यगीतम् । | ८९ |

| विषयः | | पृष्ठम् |
|---|---|---|
| X | | |
| सुभाषितानि । | | ९०–९६ |
| कश्चिद्धृदयम् । | (१) | ९७–९८ |
| | (२) | ९९–१०० |
| | (३) | १०१ |
| | (४) | १०२ |

## ॥ अर्पणम् ॥

उपहितमन्जुलबोधां
    चरणाङ्गदसख्यचापलोन्मेषाम् ।
अङ्गीकरोतु कृपया
    रङ्गनटः किङ्किणीमालाम् ॥

ॐ

वन्दे दन्तिमुखं कुमारममराधीशं दिगीशानपि
ब्रह्माणं हरिमीश्वरं श्रियमिलां वागीश्वरीमीश्वरीम् ।
वन्दे नन्दनपादपान् सुरगवीं वन्दे च मन्दाकिनी-
मिन्दुं चाप्यरविन्दबन्धुमितरच्चर्क्षं च तज्ज्योतिषाम् ॥

# ॥ किङ्किणीमाला ॥

---

## ॥ गणेशगीतम् ॥

जय भूधर-कुलनायक-तनया प्रिय-सूनो ।
गण-नायक, सुख-दायक, घृत-मोदक, देव ॥ १ ॥

अघ-शोषण, शशि-भूषण, नत पोषण, दीने ।
करुणा-मयमयि पातय मयि वीक्षणमीश ॥ २ ॥

प्रणवात्मक, तिमिरापह, गज-वक्त्र, गणेश ।
कुरु मङ्गलमव मामति-मधु-विहसनेश ॥ ३ ॥

त्रिपुरान्तक-मनुनन्दित-निजाविघ्न, धीर ।
निखिलार्पित, निरुपद्रव फलदान धुरीण ॥ ४ ॥

हृदियागत सुगुणं मम पदयोः कुरु सिद्धे ।
हतदानिह-दुरितानि च क्षपय गणनाथ ॥ ५ ॥

॥ षण्मुखभूषणम् ॥

सुरान्नेतुमाजौ विनेतुं च दैत्यान्
परां ज्ञानकाष्ठामुपारोढुमारात् ।
महाशौर्यसौन्दर्यसीमान्तयोगं
प्रमातुं किमाधाद्भवस्त्वत्तिसृक्षाम् ॥ १ ॥

वपुः सुन्दरं ते घनप्रेमचञ्च-
द्भवानीदृगालीढमुद्दिश्य मन्ये ।
कुमारं विदुस्त्वां यतः कुत्सितोऽभूत्
स मारस्त्वदाविर्भवादेव लोके ॥ २ ॥

पिता तेऽधुनापि ध्रुवं मारवैरी
पुरस्ताद्विरागात्मनां ह्येष दृष्टः ।
परं तु स्मरं नो दहत्येष भूय-
स्त्वदाकारलेशानुकारानुकम्प्यम् ॥ ३ ॥

जगद्वन्द्ययोरादिपित्रोः सुतं त्वां
कुमाराह्वया लालयन्ति स्म सन्तः ।
हरन् भिल्लकन्यां वसन्नद्रिशृङ्गे
गुरून् शिक्षयन्नस्यतो दुर्महस्त्वम् ॥ ४ ॥

विवृत्तं नतं व्यस्तमुत्तानितं वा
वहेदेकमास्यं परोक्षं च या मे ।
विभो षण्मुखोऽसि प्रसीदेह दिष्ट्या
ममानुग्रहायैकमस्त्येव वक्त्रम् ॥ ५ ॥

भुजङ्गप्रयातं निरीक्ष्यानुपाये-
ष्वयं ते मयूरो वहन्नेव च त्वाम् ।
कृपार्द्रो यदि त्वं न मे सन्निधत्से
विकर्षामि पदौ पद्यपाशप्रभावात् ॥ ६ ॥

यथा ते पितैव प्रपन्नस्य तातो
यथा ते जनन्येव माता शिलोच्चयायाः ।
तथैवासि च त्वं कुमारः स्वपित्रोः
कुमारः समस्तेऽपि लोके प्रतीतः ॥ ७ ॥

अपक्षोऽभ्रभेदी मनोनीलकण्ठो-
पयानाधिरूढो गुह त्वं मम स्याः ।
क्षमाभृत्सुतापुत्रशृङ्गारविग्रो
जगद्ध्यानदाता मयेयं छलेन ॥ ८ ॥

## ॥ शिवपञ्चचामरम् ॥

भावयामि सदाशिवं नव-यामिनीशकलाधरं
पिङ्गराभ-कपर्दकानन-नष्टजह्नुसुतारयम् ।
भूषणायितसर्पफूत्कृति-लुप्तभस्मविलेपनं
कृत्तिवाससमम्बिकासखमानतं सुरराजिभिः ॥

---

## ॥ शिवनमस्कारः ॥

सर्वमङ्गलात्मकं नमामि चन्द्रशेखरम् ।
शासितपुरत्रयं नमामि मेरुकार्मुकम् ॥ १ ॥

वीतरागिणं नमामि विश्वसृष्टिकारणम् ।
ज्ञानभास्वरं नमामि योगिलोकभावितम् ॥ २ ॥

भोगिभूषणं नमामि भूतिभासिताकृतिम् ।
नीललोहितं नमामि कालदर्पशातनम् ॥ ३ ॥

कालकूटपायिनं नमामि फाललोचनम् ।
लोकशंकरं नमामि नाकवासिसेवितम् ॥ ४ ॥

स्वर्धुनीधरं नमामि सर्वबन्धनच्छिदम् ।
शङ्करं महेश्वरं नमामि पार्वतीसखम् ॥ ५ ॥

## ॥ शिवगीतम् ॥

नीलकन्धर देव, नमो नमो,
बालचन्द्रिरमौले, नमो, नमो,
लीलया जितकाल, नमो नमो—हर शम्भो ॥ १ ॥

कामिनीकलितार्ध, कृपानिधे,
मामिहोद्धर शूलिन्, भवाम्बुधेः,
स्वामिनः शरणं ते, पदाम्बुजम्—अवलम्बे ॥ २ ॥

भूतिभासितमूर्ते, जटाकुटी-
पातिजह्नुसुताम्भः-कणोत्कर,
भीतिदोरगभूषा-कुतूहलिन्—जगदीश ॥ ३ ॥

नन्दिवन्दितपाद, गुहप्रिय,
तुन्दिलान्यकिशोरा-श्रितोत्सङ्ग,
मन्दिरीकृतकैला-समूधर—परमात्मन् ॥ ४ ॥

शिल्पभूतसमस्त-प्रपञ्चसं-
कल्पकल्पितभद्र, सदाशिव,
कल्पसंहृविरुद्र, निभीषण—कलये त्वाम् ॥ ५ ॥

## ॥ शम्भुस्तुतिः ॥

माधवमघवत्कमलभवादिनिलिम्पविनम्य, विभो ;
शिखिजलखानिलधरणितरणिविधु-
होतृमयाङ्ग, भ्रमितचराचर ;—॥

जगज्जनिस्थितिक्षयस्वतन्त्र,
अनादिवाङ्मयगुहाशय-सनातनमृगेन्द्र,
मां पाहि पाहि कृपणोऽस्मि पार्वतीपते,
महेश्वर, गङ्गाधर, पुरहर, शम्भो ;—॥

## ॥ शारदागीतम् ॥

विद्यानाथे, चतुर्मुखजाये,
कणितविपञ्चीके, वरदे—शारदे ॥ १ ॥

ज्योत्स्नाधवले, निर्मले, वाणि,
कलय सुदीप्रां मे धिषणाम्—शारदे ॥ २ ॥

सुरगणवन्दितचरणसरोजे,
वितर गिरं महं मधुराम्—शारदे ॥ ३ ॥

गानलोले, सुस्मितवदने,
कलमृदुलालापे, रसिके—शारदे ॥ ४ ॥

नादब्रह्मसर्वस्वमूर्ते,
कुरु मयि करुणामयि सरले—शारदे ॥ ५ ॥

॥ जन्मभूमिप्रशस्तिः ॥

जय मातः पुण्यतीर्थैः—परिपूतभव्यदेहे ।
कबलितकल्मषौघे—भवपङ्कदूषितानाम् ॥ १ ॥

फलनम्रवृक्षपाली—पुलकितसर्वगात्रे ।
शरदिन्दुमन्दहास—स्फुरितसौभाग्योत्कर्षे ॥ २ ॥

प्रियसत्यपथ्यवाचं—मुनिलोकाञ्चितोत्सङ्गाम् ।
महनीयां पुण्यकीर्तिं—जननि त्वामानतोऽस्मि ॥ ३ ॥

कलसूक्तिमञ्जुलास्यैः—स्तव पुत्रैः कामरूपे ।
क्वणितविपञ्चीनादे—मधुरसङ्गीतस्तुते ॥ ४ ॥

सुरभिलतोयवातैः—कुसुमितारण्यलक्ष्म्या ।
ननु लक्ष्यसे त्वमुर्व्या—मतुले भारतदेवि ॥ ५ ॥

निवसन्ति सर्वे देवा—स्त्वयि मातः शक्तिरूपे ।
त्वदपाङ्गपातभाजां—किमसाध्यं त्रैलोक्येऽपि ॥ ६ ॥

त्वयि शक्तिर्दर्पो नस्त्वं—तव पादाम्भोजे भक्तिः ।
भवतीवो ज्ञानोद्द्योतो—दयया ते मङ्गलानि ॥ ७ ॥

## ॥ नायिकाप्रणयः ॥

प्रणयवशामिमां
दयित, मामपाङ्गय ।
सदृशं ते दयावतो
मयि नाथाभ्युपेक्षा ॥ १ ॥

शरदिन्दुशुचिस्मित-
सुन्दर, प्रसीद मे ।
सकृदपि कृतमन्तुं
नात्मानं विजाने ॥ २ ॥

चरणावुपधेहि
करवाणि सुखामर्दम् ।
मधुमिव वनाली त्वां
नन्दामि समुपेता ॥ ३ ॥

कलमञ्जुस्वनां वीणां
कणयामि श्रुतिसुखाम् ।
जयदेवसरस्वतीं
गायामि रसवतीम् ॥ ४ ॥

पवमानः सुखशीतः
प्रवहति प्राणनाथ ।
अनुरञ्जयति सद्यो
विधुरेष निशामुखम् ॥ ५ ॥

विहगा धृतामोदाः
कूजन्ति सरोवरे ।
विहरन्ति ज्योत्स्नायां
रमयमाना दिशः सर्वाः ॥ ६ ॥

चन्दनमनुलिम्पा-
म्युरसि ते सकर्पूरम् ।
मद्दत्तामिमां वीटीं
प्राणेशानुमन्यस्व ॥ ७ ॥

## ॥ सञ्जिकाविप्रलम्भः ॥

सौभाग्यस्य किमन्तरायगरिमा रुन्धे भवन्तं दृढं
किंस्वित् खण्डनमूढया निगदितं कुत्राप्यनर्हं मया ।
व्यापारैः किमुत प्रबन्धबहुलैर्व्याक्षेपतो मन्दिमा
प्रेमोर्मीतमनादरं च भवतः सञ्चिन्त्य खेदो मम ॥

व्यङ्ग्यप्रधानतां ते जानत्यपि संभृतोरुसंकल्पा ।
आकण्ठतो निषेधान्न दृढं प्रत्येमि वैरस्यम् ॥ २ ॥

दशशतसहस्रवारं
सशपथमभिधाय सायमागमनम् ।
नयेक्षसे प्रविशां
अहह ! पुनः सप्रतीक्षाहम् ॥ ३ ॥

न तथा स्वजनविरोधे
न तथा दूरादुदन्तविच्छेदे ।
न तथा क्रीडाभङ्गे
प्रतीक्षया वै यथा खिद्ये ॥ ४ ॥

गरुदारकालिनि पतति
प्रस्पन्दति पर्णे भृशं जनालापे ।
पदशब्दमनुमिमाना
सायं सायं समुद्वीक्षे ॥ ५ ॥

चटुभिर्विनोदपटुभिः
शपथैर्व्यपदेशसाहसैर्बहुभिः ।
पुरतः प्रत्ययनीयः
पश्चाज्ज्ञातोऽसि विप्रलम्भेन ॥ ६ ॥

द्वारनिरीक्षणखिन्नां
श्वसतीमुग्रं रुषा च दष्टोष्ठाम् ।
मामनुमाय परोक्षे
निर्दय नूनं हसन्नास्से ॥ ७ ॥

भङ्क्त्वा सङ्गरशतमपि
न लज्जसे त्वं पुनः प्रतिज्ञातुम् ।
छलशतमहमपि दृष्ट्वा
न पुनस्त्वय्यर्थिनी लज्जे ॥ ८ ॥

चिन्तायासानुशय-
प्रकोपसंरम्भसंशयक्षुभितम् ।
न ददात्यनुभवितुं मे
चेतो दिवसान्तसौभाग्यम् ॥ ९ ॥

अयमस्ताचललग्नो
प्रतिसंहरते यथा यथा तापम् ।
त्वदधीना वृत्तिर्मे
मनसस्तु तथा तथा विपर्ययति ॥ १० ॥

अनलसखो मरुदिति य-
ल्लोके दृष्टं तदरिव निरवद्यम् ।
मन्दोऽपि मातरिश्वा
दीपयते हृच्छयानलं किल मे ॥ ११ ॥

सौभाग्यवारिधाहं
त्वत्कदनं यं स्मरं तदाजानाम् ।
अद्य प्रतीपकरणा-
द्वेद्मि त्वं भूरिभूरि पातकिनम् ॥ १२ ॥

निष्करुणो मयि मदन-
स्त्वं तावद्विप्रलम्भनिष्णातः ।
किं प्रतिकुर्वे संप्रति
भिनद्मि मदनं न चेदनङ्गोऽसौ ॥ १३ ॥

कमनीयस्त्वमदर्पः
प्रेम्णा दैन्येन साहसैरपि वा ।
हृच्छय एव विकर्ता
यं यत नासादयामि विधिहतकम् ॥ १४ ॥

प्रेमभरं त्वयि विमुखे
दुःखायैवानुभवामि ।
पटवः पुरुषा लोके
प्रायो जानन्ति योषितां नार्तिम् ॥ १५ ॥

काल: कियान् सुभोग्य-
स्तस्मिन्नप्यवसर: कियान् घटते ।
तत्रापि विप्रलम्भो
यदि भो रतिवैरिभिर्विजितम् ॥ १६ ॥

अवतंसयति कलापं
ताराणां शर्वरी पुरत: ।
रमणप्रतीक्षयेयं
तामाशां खण्डिता तु विश्रणाति ॥ १७ ॥

सर्वस्माद्वल्लभा:
श्रुतिदृक्स्पर्शादिवृत्तयो हृदये ।
शून्ये विभावयन्ति
त्वामेवाशेषपूर्णं पुरुषम् ॥ १८ ॥

अधिगत्य विरलल्भ्यं
त्वयि नाथ प्रेमयोगसाम्राज्यम् ।
त्वद्विरहोष्मविलीनं
चेतस्तूर्णं विनिष्पतति ॥ १९ ॥

नैतद्विस्मरणं च नाम तव भो: स्थायी किलासौ रस:
स्मृत्या नाथमनादरो मयि तव प्रेमा यदन्यादृश: ।
अप्यप्रस्तुतमानुकूल्यमुपदर्श्याशां वितत्याधिकं
सिद्धिं किन्तु विदूरयन् मम विधि: प्राणै: परिक्रीडते

॥ मारतूणीरः ॥

संहृत्य लोचनमनीषदुदीर्णराग-
संकेतनिर्गुणमपेत्य पुरः पुरोऽपि ।
संयम्य भावपिशुनान्यखिलेङ्गितानि
माध्यस्थ्यमिच्छसि बलात् कुशला किल त्वम् ॥ १ ॥

दूरे रतव्यतिकरोऽस्त्वधरोपदंशो
मा भून्मनागपि मनोभवपारतन्त्र्यम् ।
सौहार्दमात्रपिशुनैककटाक्षपात-
कल्याणपात्रमपि नाभवमम्बुजाक्षि ॥ २ ॥

कामं तथास्त्वसुलभो रहसि प्रसङ्गः
कामं ममास्तु मदनः कदनो नितान्तम् ।
आपिप्रियेत यदि चिल्लिदुपान्तलोल-
लीलावलोककुतुकः सफलास्मि धन्यः ॥ ३ ॥

आविर्भवंस्त्वदभिसन्ध्यनपेक्ष एव
प्रत्युद्गमं पुरसनेषुरमाशुपसम् ।
त्वद्दृष्टिकोणमणिपाटितमद्य चिन्वन्
रोमाञ्चिनिर्दहति मां हृदि शल्यमूलः ॥ ४ ॥

बाढं कठोरहृदया भुवि पङ्कजाक्ष्यो
यत्पारयामि इति रूढदृढावलेपाः ।
संमोहयन्ति मदयन्त्युपदर्श्य केली-
र्व्यग्राः परं परिचयं विनिवारयन्ति ॥ ५ ॥

वाचो न चोचितपथव्यभिचारशीला
दृष्टिस्तु मौग्ध्यविमला नियतप्रचारा ।
कामात्मनां तदिदमुत्थितमुत्थितं नः
शङ्काकुलं शिथिलतामुपयाति चेतः ॥ ६ ॥

संमोहनं सृजति यस्तु यदि प्रशस्तं
तत्कल्पयत्यलघुलभ्यमथाप्यलभ्यम् ।
व्यर्थप्रलोभनकदर्थनकं वितन्वन्
रम्येण हन्त मृदुनापि निहन्ति वेधाः ॥ ७ ॥

क्षिपसि मम समाधिं कार्यजातेष्वजस्रं
विघटयसि च निद्रां तापमुद्वीय रात्रौ ।
प्रथयसि विपुलं मे जाग्रतः स्वप्नजालं
विहरसि च विचित्रं मत्कसङ्कल्पमार्गे ॥ ८ ॥

चिन्तास्वप्ने जागरस्वप्नकाले
निद्रास्वप्ने नित्यमग्ने भवन्ती ।
लीलालोलैर्लालयित्वा विलासैः
साक्षाद्दृष्टा सत्वरं किं प्रयासि ॥ ९ ॥

त्वदालापश्रुत्याः श्रुतिरपरतो मोघविषया
पुरश्चिन्ताचक्षुस्त्वदनुकृतिमुत्थाप्य रमते ।
मनः सङ्कल्पौघैः परिचयरसान् क्वापि सुखितं
हठान्मे पञ्चेषुप्रभवमदमूर्छा प्रभवति ॥ १० ॥

अपाङ्गस्ते नीलः स्मितमतिसितं केशमसितं
कपोलः सौवर्णद्युतिरधरबिम्बोऽरुणरुचिः ।
त्रिभङ्गं ते मध्ये भवतु च वपुः शम्बररिपो-
र्धनुः सज्जं मन्ये सकुसुमविनानासुमशरम् ॥ ११ ॥

सद्योविजृम्भितभवत्त्वदपाङ्गपात-
पुञ्जत्रुटी पिबतां मम किं ब्रवीमि ।
विश्वस्यते करणमस्ति मनःप्रमोषः
कोऽपि ज्वरः प्रसरति प्रथतोऽङ्गमङ्गम् ॥ १२ ॥

आवेपते मम परिभ्रमति प्रमोह-
प्रक्षोभविक्लवमयि त्रसदेणनेत्रे ।
गात्रं, प्रसह्य हृदयं त्वयि निर्हरन्त्यां
लीलावलोकवडिशीपयिकोद्गृहीतम् ॥ १३ ॥

एते नु चित्तदलना असिपुत्रिकाः, कि-
मेतेऽन्तकायितमनोभवहस्तपाशाः ।
एते स्मरानलविनिष्पतिता नु धूमा
एते विपाकवदना मदनेषवो नु ॥ १४ ॥

इन्दीवरं मदनपञ्चशरीधुरीणं
स्त्रीणां विदुर्नयनपातमिषात् प्रवृत्तम् ।
कालेन तन्वि कियता यत पञ्चबाणो
बाणीकृतैर्जगति खेलति कृष्णसर्पैः ॥ १५ ॥

त्रस्तं वयाक्षि वपुरत्र तु वेपते मे
लज्जावृणोति भयतीं जडिमा समान्तः ।
मुग्धा त्वमत्यदद नश्यति चेतना मे
हेतुं स्मरस्त्वयि फलं मयि च व्यनक्ति ॥ १६ ॥

कर्णोपकण्ठविरलप्रतनूपसर्प-
द्रोमावलीपरिकरं निकषा कपोलम् ।
नक्तं सुमेरुतटरूढमृदुप्रकाश-
ताटङ्कवत्तव मुखं हरते मनो मे ॥ १७ ॥

मत्तोऽस्मि गाङ्गेयकनत्कपोल-
मूलस्फुरत्कुण्डलदीप्तिना ते ।
साचिस्थितेन स्वमूर्धजाले-
प्राग्भारदर्शांसतलेन तन्वि ॥ १८ ॥

यत्राक्षिकोणमिलनेऽप्यपवर्तिताक्षी
भिन्ते मनोरथशतं भवती प्रतीपा ।
तत्र प्रयातफलदर्शपकितां तनुं ते
तन्वि क्षणे तरलितामिव भावयामि ॥ १९ ॥

श्यामामुदित्वन् कुसुममयीमिव गन्धसार-
सारामिव द्युतिसारीमिव, सौष्ठवानाम् ।
शृङ्खलभूमिमिव, मानिनि, चातुरीणां
केलीपदीमिव दधे हृदयं प्रविष्टाम् ॥ २० ॥

———

॥ जलदमालिनी ॥

कालजलधरमालिकया निशि
चन्द्रे मुकुलिते ।
नीलनिवसनमादधती धुरि
केयं सुवदना ॥ १ ॥

वाति परिमलवाहिनि सारस-
वाते शिशिरिते ।
याति निवसनभङ्गिषु शेखर-
मालां पिदधती ॥ २ ॥

क्वापि निभृतकुलायनिपातिनि
मूके द्विजकुले ।
व्यापिमणिगणशिञ्जितसाध्वस-
सन्दिग्धगमना ॥ ३ ॥

पादपरिचलपर्णविलुण्ठन-
पर्याकुलपदा ।
मोदनिपतितभृङ्गनिवारण-
मूलस्करयुगा ॥ ४ ॥

वारिधरपरिवेष्टदिरम्मद-
रेखाविदलिते ।
भूरितमसि निशीथे विगलित-
विद्युद्विलसिता ॥ ५ ॥

स्थूलजलकणवर्षिणि गर्जति
मेघे प्रचकिता ।
लोलविवशदृगञ्चलताडित-
वीथीपरिसरा ॥ ६ ॥

गर्ज जलधर, गर्जति च त्वयि
जीयान्मृगदृशाम् ।
जर्जरहृदयकामिजनामय-
दानप्रसदनम् ॥ ७ ॥

---

॥ प्रेयसीस्मृतिः ॥

भागधेयविरहादनादृतः
पुंभिरव्यतिकरः पराभवम् ।
संस्मरन् रहसि लज्जया वृतः
प्रार्थनाव्ययभरैर्यदाभवम् ॥ १ ॥

दैवतेषु विमुखेषु दुःखितः
स्वेन च स्वमवकुत्सयन् क्षितौ ।
सस्पृहं सुकृतिनां समाहितः
संपदि प्रणयिषु शुचौ धृतौ ॥ २ ॥

कस्यचित् किल कलासु कौशलं
जृम्भणान्यभिलपन् परस्य या ।
यत् स्थित तदवधीरयन्नल
वाग्यदुत्कहृदयो निरुत्सवः ॥ ३ ॥

त्वद्गतामयि तदा यदृच्छया
द्रागगाहिषि सुधामयीं स्रुतिम् ॥ ४ ॥

तत्क्षणान्मम मनो दिनोदया-
मोदमुग्धकलकण्ठपद्धतिम् ।
संश्रितं किमपि गातुमुच्चकै-
रत्यलङ्घ्यदुपांशु वेदनाम् ॥ ५ ॥

चर्व्यमाणमधुरां त्यजामि कैः
प्रेयसीस्मृतिविकल्पकल्पनाम् ।
भूभृतामपि सवाजिवारणैः
संपदां समुदयैरकारणैः ॥ ६ ॥

## ॥ विरहिवैक्लव्यम् ॥

मयि पश्य विशीर्णपर्णराशेः
परिणामं विरताण्डजोत्सवस्य ।
शिशिरप्रचयोर्जितज्वरार्ति-
प्रभवोद्वेगजुषो महोरुहस्य ॥ १ ॥

अपि वा दिवसात्ययप्ररोह-
न्नवसन्ध्यामहसो दिशि प्रतीच्याम् ।
अचिरादवलुप्यमानताया-
स्तुलनां मुद्रणशीलया रजन्या ॥ २ ॥

विकृतिं मयि तामुतेन्धनस्य
ज्वलदुत्तुङ्गशिखिप्रदीप्तमूर्तेः ।
अमुनैव च भस्ममात्रशेषा-
मुपनीतस्य दशामसह्यधाम्ना ॥ ३ ॥

अयि मामवलोक्य तत्त्वतः
करुणामर्हसि कर्तुमञ्जसा ॥ ४ ॥

---

॥ राघवविलापः ॥

हा प्रेयसि राममपाङ्गय मा-
मवनिसुते ते प्रणयवशम् ।
क्वचन विलीना कुहनारीत्या
पापं शङ्के तव कठिने ॥ १ ॥

यजनभवे ते पावनचरिते
प्रणयमये मय्यपि सदृशम् ।
रामे दुःखायैवोत्सृष्टे
दृग्धोऽप्येवं न विदीर्ये ॥ २ ॥

दयिते मयि ते क्व गिरस्तरला
निर्दयतेयं क्व च भीरु ।
अपि नामास्वं नयनसुखं मे
ध्रियसे जानकि हा दयिते ॥ ३ ॥

मुषितोऽस्म्यद्य प्रसरत्यान्ध्यं
विगतालम्बो निपतामि ।
क्षुभ्यति चेतो मुह्यत्यात्मा
जीवय मामयि मुग्धमुखि ॥ ४ ॥

कियदिव हसितं कियदुपभुक्तं
कियदिव सुप्तं रहसि तया ।
कियदुक्तं वा हतरामेण
क्षमसे तन्मम न खलु विधे ॥ ५ ॥

अद्योन्मिषितं यौवनतरुणा
मुकुलोऽप्यमुना नेह गृहीतः ।
किमिव पदं हा दाम्पत्यं नौ
पौरुषदर्शनविषये ते ॥ ६ ॥

लतिके दर्शय चारुविलासान्
कलहंसाश्रय गतिमलसाम् ।
ज्योत्स्नामुल्लासय चन्द्र न सा
पुनरपि कर्षति वः कीर्तिम् ॥ ७ ॥

कुवलयनयने हा मृदुहसने
मय्युत्कूलप्रेमभरे ।
जीर्णारण्यं जगदिदमखिलं
न्यस्तानन्दो रामस्ते ॥ ८ ॥

शिशिरापाङ्गान् मुग्धविजल्पान्
मयि विस्रम्भाचरणानि ।
स्मरतो विरतोत्सवदग्धहृदः
पश्यापरयां तरलाक्षि ॥ ९ ॥

हा प्रेयसि हा मृगशावाक्षि
जीवितनिलये हा सीते ।
निरवधिविलये सीदन्तं मां
कथमिव सहसे पश्यन्ती ॥ १० ॥

निशि चण्डांशुर्दग्धसमीरो
निर्दहतो मां प्रलयगतम् ।
तामरसाक्षि प्रेमरसार्द्रे
हा त्रायस्व प्रियसखि माम् ॥ ११ ॥

निनदत्कङ्कणकमनीयं ते
करमेह्यर्पय जनकसुते ।
प्रहसितकमलाभिख्यं तन्मे
पुनरपि दृश्यं मुग्धमुखम् ॥ १२ ॥

पुरतः पश्चान्नभसि ह्रदन्त-
स्त्वामपि पश्यन् प्राणसखि ।
सीदन्नन्धे तमसि विलीये
जीवय मामयि जीवय माम् ॥ १३ ॥

---

॥ श्रीकृष्णलीलागीतम् ॥ मृद्भक्षणम् ॥

भक्षयति बालकृष्णो रथ्यामृत्तिका-
मिति रामसुखाच्छ्रुत्वा तत्र यशोदा ।
कटकटाकृत्य दन्तानापतन्ती
व्यादेहि वक्त्रमिति कृष्णमग्रहीत् ॥ १ ॥

अम्ब पश्येत्युत्तरलं वीक्षमाणो
गद्गदोक्तिर्बालकृष्णो व्यादादास्यम् ।
परिवृत्य गोपबाला अन्तर्हसन्तो
राममग्रे कृत्वा तस्थुः कौतूहलेन ॥ २ ॥

मृत्तिकां दिदृक्षमाणा तत्र यशोदा
किमपश्यद्धा हन्त कृष्णवदने ।
दृश्यन्ते गिरिनदीकाननानि
पौरजानपदाश्चापि सञ्चरन्ति ॥ ३ ॥

सविकासमास्तीर्णं ब्रह्माण्डं
सचराचरभेदं सर्वलोकम् ।
तत्रापश्यद्विस्मयेन यशोदा
स्वमपि च व्यात्तमुखं चापि कृष्णम् ॥ ४ ॥

---

## ॥ स्थाणुपरिदेवनम् ॥

यद्यस्ति कौतूहलं वां
 ब्रह्माच्युतौ वच्मि यत्स्थाणुभूतः ।
तिष्ठामि दुर्ज्ञेयरूपो
 मूले शिरस्यप्यनासाद्यमानः ॥ १ ॥

रागी न चाहं प्रकृत्या
 तस्यापि निर्वेदमूलान्यभूवन् ।
हा धिग् द्विभार्यस्य गेहं
 स्पर्धाङ्कुरे जह्नुकन्याभवान्यौ ॥ २ ॥

पीडामदत्तामजस्रं
 गार्हस्थ्यमासीद्यथा दुःसहं मे ।
किं वर्णयाम्यात्मजातौ
 पूर्वो हि मत्तः स्वमभ्यर्हणार्हम् ॥ ३ ॥

मेने मदान्धस्तदास्ता-
 मन्यस्तु कामादनादृत्य शीलम् ।
भिल्लीं गृहानानिनाय
 प्रोक्तो हितं चेत्पुरोमार्गपुर्यः ॥ ४ ॥

मामेव शास्त्रात्मतत्त्वं
   तादृग्विधे मेऽथ गार्हस्थ्ययोगे ।
सर्वस्वमाराज्जहार
   प्रेयानिति च्छद्मना यक्षनाथः ॥ ५ ॥

वासो दिगीशैर्गृहीतं
   स्थानं पिशाचैरभूदावृतं च ।
क्षीणोऽभवद्दैवयोगात्
   प्रीत्या कलावान् धृतो मूर्ध्नि नित्यम् ॥ ६ ॥

निर्विण्णमासीन्मनो मे
   भिक्षुर्भवंस्त्यक्तसंसारबन्धः ।
कैलासशैलाभिरागा-
   मुन्मत्तवद्भ्राम्यं सर्वलोकान् ॥ ७ ॥

किञ्चाप्यवात्सं श्मशाने
   भिक्षामटन् क्वापि मिथ्याकृतेर्यैः ।
शान्तोऽभवं योगिवृन्दैः
   कर्तव्यशून्यस्ततः पाण्ड्यदेशे ॥ ८ ॥

भृत्योऽभवं वृत्तिहेतो-
स्तत्रोद्वहन् मृद्भरं स्वल्पमन्तुः ।
वेत्राहृतिं घोरपातां
पाण्ड्यस्य लब्ध्वा दिशः पर्यधावम् ॥ ९ ॥

कुत्रापि नासीच्छमो मे
लोष्टैर्वैदुः कोऽप्यहन्मामकाण्डे ।
पादेन कश्चित् किरातः
कोदण्डकोट्यापरः प्राहरन्माम् ॥ १० ॥

कौलीनमश्रौषमुच्चै-
र्ब्रह्मघ्न इत्यात्मसम्बन्धि लोके ।
कापालिकं मां निनिन्दुः
केचिच्छ्मशानालयं वामवृत्तम् ॥ ११ ॥

सर्वत्र भ्रमस्ततोऽहं
वीतस्ववन्ध्वर्यकीर्तिप्रभावः ।
श्रेयो मृतिं मन्यमानः
काकोलमेवापिबं निर्विशङ्कः ॥ १२ ॥

कष्टं स्थिराः प्राणवाताः
दुःखोपदग्धं तदा नो जहुर्माम् ।
जीवन्निरानन्दलेशो
बीभत्सलज्जाविषादाभिभूतः ॥ १३ ॥

स्तब्धः प्रमुह्यन्नतिष्ठं
स्थाणुर्यथा वज्रनिर्घातदग्धः ।
नाज्ञासिषं चापि किञ्चित्
प्राप्तौ युवां यावदद्राक्षतं माम् ॥ १४ ॥

श्रीमन्महालिङ्गगीतं
जीयादिदं मे विषादाभिधानम् ।
लोके लयं यान्तु शोका
अस्यानुसन्धानपुण्यान्नराणाम् ॥ १५ ॥

---

## ॥ आकाशताराः ॥

आकाशताराः
स्फुरणप्रकाराः
पश्यात्युदाराः
करकानुकाराः ।
फेनायमाना
वियदम्बुराशे-
र्बिन्दूपमाना
नभसो वराशेः ॥ १ ॥

प्रसूनहस्ता
इव पर्युदस्ता
निशोऽवतंसा
रजनीशपुंसा ।
आकाशगङ्गा-
कुमुदान्तरङ्गा
व्योमाख्यभूपा-
वसथप्रदीपाः ॥ २ ॥

मुक्ताफलानां
प्रकरात्च्युतानां
दिशां मुखेभ्यः
स्मितबन्धुरेभ्यः ।

द्युवेशवाटा-
　　स्तरणे वराटाः
पणप्रकीर्णाः
　　प्रतियुक्तवर्णाः ॥ ३ ॥

महाभ्रकुम्भा-
　　हितरत्नदम्भा
नभोनिकुञ्जा-
　　कुलितालिपुञ्जाः ।
आकाशखाता-
　　धिगतानुपाता
ज्योत्स्नानुविद्धा-
　　म्बुकणा विशुद्धाः ॥ ४ ॥

एता मरुत्व-
　　न्नयनोपमत्वं
परस्सहस्राः
　　प्रथमानदस्राः ।
कृत्वा नराणां
　　भुवि पामराणां
पश्यन्ति नित्यं
　　सदसच्च कृत्यम् ॥ ५ ॥

---

## ॥ प्रभातवेला ॥

इतो नु भो रम्यतरं धरित्र्यां
   शक्यं कदाप्यात्मवता महीतुम् ।
चक्षुःफलं त्वीदृगुदारशोभं
   मन्देतरः को न्वविवोढुमीष्टे ॥ १ ॥

प्रभातवेलामुपरि स्फुरन्तीं
   धत्ते दुकूलप्रतिमां पुरीयम् ॥ २ ॥

शाला गृहा देवकुलानि नावो
   मरुत्पथे निर्मलमासि भान्ति ।
विभ्रन्ति जोषं समुदभ्रशृङ्गा-
   ण्यपावृतानीव दिवो भुवश्च ॥ ३ ॥

प्रभातलक्ष्म्या निबिडोपगूढा
   नैतादृशीं कुत्रचिदप्यविन्दन् ।
पुरा दरीशैलभुवो विकास-
   महो ममायं मनसः प्रसादः ॥ ४ ॥

स्वच्छन्दमन्दं सरतीयमारात्
   सरित् समन्तान्निभृतान्यमूनि ।
सुषुप्तिमाञ्जीव गृहाण्यहो भोः
   शेते जगत् सर्वमहृत्ति चेदम् ॥ ५ ॥

---

॥ जलदागमः ॥

प्राप्तः पयोभारवर्षी
विद्युत्प्रभालेपतर्पी
चण्डारवोद्गारहर्षी ।
कालः कदम्बार्जुनामोदकर्षी
विश्लिष्टलोकेष्वमर्षी ॥ १ ॥

वर्षत्यजस्रं पयोदः
प्राप्तो हुलायैः प्रमोदः
पान्थैरवाप्तो विषादः ।
सौधप्रवृत्तैः प्रसक्तो विनोदः
स्त्रीणां मयूरैरखेदः ॥ २ ॥

नक्तंदिवं मीलिताक्ष-
मासीच्चिरायान्तरिक्षं
बिम्बं खरांशोः परोक्षम् ।
नार्यो न पद्मन्त्युपेता गवाक्षं
यूनां निदेष्टुं कटाक्षम् ॥ ३ ॥

आस्ते पयोदानसत्रं
पूर्णं द्रुमाणाममत्रं
धाराहतं पद्मपत्रम् ।
उच्चस्त्रुभिश्चातकैर्मों विचित्रं
प्राप्तं न तद्बिन्दुमात्रम् ॥ ४ ॥

नष्टेन्दुतारार्कचारं
विद्युत्प्रभालेपशारं
नीरन्ध्रमुक्ताम्बुधारम् ।
शश्वद्विनिर्मुक्तसंरावघोरं
व्योमाभितो दुर्निवारम् ॥ ५ ॥

॥ अम्बुवाहः ॥

पुष्पद्रुमाणां समुपोषितानां
सरित्तटाकार्णवसंगृहीतैः ।
नवाम्बुभिस्तोषयिताहमस्मि
प्रावृट्प्रियो वारिधराभिधानः ॥ १ ॥

निद्रालसानां दिवसे कठोरे
स्निग्धच्छदानां वनपादपानाम् ।
भानुं तिरोधाय दिवि प्रसर्प-
श्छायां सुभोग्यामुपकल्पयामि ॥ २ ॥

मत्पक्षनिर्धूतपयःपृषत्कै-
रुच्छ्वासमृच्छन्ति हि कुड्मलानि ।
स्फुरन्ति भानोः पुरतः प्रनृत्य-
ल्लतावधूशेखरविभ्रमाणि ॥ ३ ॥

विकीर्य पूरं करकोपलानां
श्यामां भुवं शुभ्रतरां करोमि ।
विद्राव्य वृष्ट्या निखिलं पुनस्तं
मुञ्चामि चञ्चन्नशनिप्रहासान् ॥ ४ ॥

उच्चैस्तटानां धरणीधराणां
  शृङ्गेषु मद्वृष्टहिमप्रवर्षैः ।
असह्यभारावनता बृहन्तो
  वनद्रुमा घर्घरयन्ति घोरम् ॥ ५ ॥

मनोन्मिषन्मन्दसमीरतल्पे
  निद्रासुखं निर्विशतोऽविशङ्कम् ।
सितोपधानत्वमपूर्वमजन्ति
  हैम्यः शिलासंघटना गिरीणाम् ॥ ६ ॥

नभोऽवकाशाप्लवनोद्यतस्य
  विद्युत्कलापः किल नाविको मे ।
वियन्निकुञ्जावसथानि नित्यं
  विद्योतयन् दीव्यति दुष्प्रधर्षः ॥ ७ ॥

यन्ता नयत्येष तडिद्धयो मां
  स्वैरं निजेच्छामनुवर्तमानः ।
नदीसरःकाननर्निर्झराढ्यान्
  भुवो विभागानपि चाम्बुराशिम् ॥ ८ ॥

चिरप्रवर्षाद्भिरलैर्जलौघैः
परोक्षतामेव यदा प्रयाति ।
स्वच्छोऽहमानीलरुचाम्बरेण
प्राग्भारभाजा द्युतिमभ्युपैमि ॥ ९ ॥

प्रातस्सरोयमधिकारुणदर्शनोऽर्कः
सिंहः शिलाग्रमिव भासुरकेसरालिः ।
पृष्ठं मम प्रचलतः सहसाधिरोहन्
हन्त्येकमृक्षमवशिष्टमयूखजालम् ॥ १० ॥

सायं प्रबोधिषु शनैः स्मरशासनेषु
सन्ध्यापटीपवनपिञ्जरिते द्युभागे ।
निस्पन्दमास्मि शयितो मरुदङ्कपाल्यां
नीडेऽण्डरक्षणपरेव कपोतयोषित् ॥ ११ ॥

मय्याकीर्णे रजनिमरुता दूरविस्तारभाजि
स्फारच्छिद्रे तुहिनकिरणस्येव पादोपमर्दैः ।
सोपाधाराः प्रतिफलनतः प्रोत्थितेन्दुबिम्बाः
शोभन्ते मद्विवरगलितव्योमखण्डा इवापः ॥ १२॥

कालेऽन्यस्मिन्ननिलनिहतो व्याप्नुवन्नम्बरान्तं
तेजोदुर्धर्षमपि विरयन् मण्डलं चण्डभानोः ।
चन्द्रज्योत्स्नामपि मलिनयंस्तारकालिं विलुम्पन्
मन्दीकुर्वन् दवमगशिरस्सङ्गतं सञ्चरामि ॥ १३ ॥

प्रत्युर्वीभुजमचलोश्चकीलपाली-
व्यालम्बी तरणिकरैरवेधनीयः ।
स्तम्भालीविधृतविशालसेतुमत्तां
पाथोधेरिव विदधामि संहृतोर्मेः ॥ १४ ॥

अशनितुहिनविद्युच्चण्डवातप्रचण्डे
मयि नियमितसर्वव्योमत्रासप्रभावे ।
प्रविशति सुरचापं गोपुरद्वारमार्द्रा
लसति धरणिरर्कोऽप्येति कान्तं विलासम् ॥ १५ ॥

स्फारोद्वृष्टजले मयि व्यपगते शान्तोपरोधोज्ज्वलौ
स्वच्छं सूर्यविधू करैः कलयतो यावन्नभोमण्टपम् ।
तावद्वारिनिधेरहं समुदितस्तत्तत्करोम्यन्यथा
लायं लायमुदित्वरस्य मम कः कालेन रूपात्ययः ॥ १६ ॥

---

## ॥ कोकिलगीतम् ॥

अकस्मादुन्मीलत्यथ जलधरातोद्यनिनदे
प्रनृत्ते सानन्दं शिखिनि मधुपे झंकृतिकरे ।
समुत्सृष्टज्योत्स्नाविसकवलमापीतमभित-
श्चकोरैः कादम्बैरपि शृणुत नः पञ्चमरवम् ॥ १ ॥

जवाच्छिन्दन्नम्भोधरयवनिकामृक्षपटलीं
करैर्दूरं दूरं तुहिनरुचिरुत्सार्य वियतः ।
समारूढः शृङ्गं रसयति तथास्मन्निनदितं
यथा तस्यामोदैर्भुवनममृताप्लावितमिव ॥ २ ॥

दिशासैरन्ध्रीषु स्फुटतरलताराञ्चिततनु
स्फुरन्तीषु प्रेङ्खत्यपि कुवलयामोदमरुति ।
वियद्वीथीरङ्गे प्रियतमकरालम्बसुखिताः
प्रलम्बन्ते गीतिश्रवणकुतुकेन द्युमहिलाः ॥ ३ ॥

चतुर्वेदातीतः स खलु निगमोऽन्यः श्रुतिसुखः
स चोपायस्तुर्यादपि परतरः पुष्पधनुषः ।
पुमर्थः कोऽप्यन्यः स तु सुखमयो यत्नफलयोः
सुधासध्रीचीनः परिवहति यो नः कलरवः ॥४॥

सुधानार्द्रीधाराक्षरणमिव जातोर्ध्वविसरं
पृथक्केनोपात्तामिव जननमाजां सुखकलाम् ।
विभावैस्तैस्तैर्नः किमपि सुरसितानां शुचिमनः-
प्रमोदाभिष्यन्दं श्रुतिचुलकितं कोऽपि कुरुते ॥ ५ ॥



## ॥ सुवर्णपञ्जरम् ॥

उद्घाट्यैतत्पञ्जरं मञ्जुलाङ्गि
क्षीणप्रायं मोचयेर्याचमानम् ।
बाल्ये किञ्चित् पक्षती शिक्षिते मे
नोढुं चाप्यत्र लेशोऽवकाशः ॥ १ ॥

नास्मान् सद्यो हातुमेवं तवार्हं
भ्रातः पक्षिन् रोचयास्मासु वासम् ।
सत्कारं ते सादरार्हं विधास्ये
विस्रब्धः सन् ब्रूहि यद्यत्तवेष्टम् ॥ २ ॥

का मे प्रीतिः साध्वि सत्कारभारै-
र्यस्योद्विग्नस्यास्ति तिक्तं समस्तम् ।
भूयः प्रेप्सुः पद्धतिं जन्मसिद्धां
त्वद्दाक्षिण्यादन्तरिक्षं प्रतीक्षे ॥ ३ ॥

सौवर्णं ते रत्नयष्टिप्रक्लृप्तं
सावष्टम्भस्थूणमालम्बिडोलम् ।
अत्युच्छ्राये लम्बयिष्यामि पक्षिन्
स्फारस्फारं पञ्जरं कारयित्वा ॥ ४ ॥

मूढा ह्येषा मानुषी जातिरेका
    मुह्यत्यद्धा निर्महिम्नापि हेम्ना ।
श्रेयःश्रेणीमर्थमभ्यर्थयाना
    या जानीते हन्त बन्धप्रबन्धम् ॥ ५ ॥

जातस्तेषामस्मि जातौ विहर्तुं
    येषां नालं रोदसीचक्रवालम् ।
सौभाग्यं मे तस्य कस्मादकस्मा-
    द्रत्नच्छायापिञ्जरे पञ्जरेऽपि ॥ ६ ॥

उन्मुक्तस्य स्निग्ध मुग्धोऽसि नूनं
    यो जानीषे स्वस्य नानर्थसार्थम् ।
त्वद्रक्षाणां त्वय्यहो क्रूरचेष्टा-
    मुत्पश्यन्ती नोत्सहे त्वां विमोक्तुम् ॥ ७ ॥

नैवारण्ये निर्भयः श्वापदेभ्यो
    यत्किञ्चिद्वा नान्यदुर्वैरनिष्टम् ।
दूरे कारागारबन्धाश्चारिष्णो-
    रातङ्काय स्युर्मम स्वैरवृत्तेः ॥ ८ ॥

कुत्रापि स्यान्मित्र सम्भावनीयः ।
वामाक्षीणां निक्वणत्कङ्कणानां
हस्ताभ्यासो भुक्तिपीतिप्रसङ्गे ॥ ९ ॥

मुक्ताहारो दाडिमीबीजमुष्टिं
मानिन् केनोपेक्षसेऽस्मै विकीर्णाम् ।
अत्रामत्रे तोयमाचाम चेदं
ब्रूहि क्षिप्रं रङ्गरङ्गेति भूयः ॥ १० ॥

पक्षिन् शोभां पञ्जरे पुष्यसि त्वं
त्वद्गर्भेणानेन शोभा गृहस्य ।
क्रीडाहेतोर्मत्प्रियेणोपनीतः
सौभाग्यं मे शेवधिस्त्वं हि साक्षात् ॥ ११ ॥

भ्रातर्भद्रं किमिति विवशो भ्राम्यसि च्छिन्धि शोकं
धिग्वैषम्यं किमिदमथवा किं प्रमुग्धोऽसि नूनम् ।
स्वैरं स्वैरं व्रज विघटितं पञ्जरं हन्त हन्त
त्वं निर्यातो युगपदयि भोः पञ्जराभ्यामुभाभ्याम् ॥

## ॥ चन्द्रोपरागपञ्चकम् ॥

केतोर्धूममयस्य विक्रमपरिक्षेपव्यपेतप्रभं
कौबेरं मदिरामदेन पुनरुक्तारुण्यमक्षीव तत् ।
नानाकारवराटिकादातनिभव्याकीर्णताराम्बरे
निर्मृज्याक्षि गवेषणीयमभवद्बिम्बं विधोरम्बरे ॥ १ ॥

संपूर्णं ग्रसितुं विधुं त्वमभवः कालप्रतीक्षश्चिरं
तस्मिन् पुष्कलपोषभाजि सहसा तं चैवमग्रामहीः ।
नास्वादो भविता कियानपि च ते पीयूषधाम्नामुना
केतो पापमुपैतु विक्रमधुरामौर्ष्यै भवत्यै नमः ॥ २ ॥

आराद्व्योमवितानविस्तृतकरोदारद्युतिश्चन्द्रमा
अर्वागेव तवोर्जितेन तमसा केतो निपीतोऽभवत् ।
संशोचन्ति सुधाशनाः प्रतिहताहाराश्चकोरा इमे
म्लायन्त्योषधयो नराः प्रचकितास्तुष्यस्त्वधृष्यो भवान् ॥ ३ ॥

अर्थार्थे कृतवैशसाः परधनस्फीतिं परां पापिनः
कीर्तिं चन्द्रमरीचिवीचिविशदां शुद्धात्मनां दुर्धियः ।
काव्यं भव्यगुणोदयं कवयितुर्वैदग्ध्यदग्धाशया
मृष्यन्ति क्व नु जातु पुष्कलफलं केतुश्च शीतद्युतिम् ॥ ४ ॥

रम्याणि द्विषताममर्षविषमज्वालाच्छटोद्गारिणां
स्वोत्कर्षग्रहिलत्वतः परधृतिक्षोभप्रवीणात्मनाम् ।
इन्दुभासकृतो यथास्य शिखिनः कामास्तथैवाचिरा-
द्ध्वंसीनि स्युरघानि चेन्न, सुजनः कस्माद्भुवि प्राणितु ॥ ५ ॥

---

## ॥ पेचकपञ्चकम् ॥

दुर्दर्शार्कमहांस्यहानि कवलीकुर्वन्त्वमाराश्रय-
श्चन्द्रं व्योमतलात् प्रमार्ष्टु शशकः स्वेनैव वृद्धिं गतः ।
ज्योतीरिङ्गणतारकैकलुलितस्फीतिः समन्ताद्भुवं
व्याप्नोतु प्रलयान्धकारगरिमा स्वस्त्यस्तु मच्चक्षुषोः ॥ १ ॥

रात्रावेकधुरन्धरोऽस्मि जगतः कोऽन्यः समः स्यान्ममे-
त्याक्रम्यालयगोपुरान्तरबिलद्वारं त्वयि त्वङ्गति ।
आशाः प्रोज्ज्वलयन्नसौ कुवलयप्रेयांस्त्रियामापतिः
प्राचीमञ्चति घूक सङ्घटय भोश्चक्षुःकपाटं दृढम् ॥ २ ॥

प्राणी काङ्क्षति यं न येन रहितः कर्मस्वलं युज्यते
तं विद्वेष्टि भवानुलूक कलयाप्यालोकमालोकितुम् ।
काकेष्वाकलयन् विपक्षगणनां शौर्यं विधत्ते परं
लोकातीतपथानुवृत्ति भवतो वक्ष्ये किमुत्कर्षदः ॥ ३ ॥

इन्दुं निन्दति तेजसां निधिमनुरमतुं न संमन्यते
वैधेये अनुकम्पते शुतिमति स्मेरे सरोजोत्पले ।
जात्यन्धान् विविनक्ति दर्शनविधेरालोकसाद्वेषिणो
लोकान् घूकमहाशयः परिषदं कृत्वा जतूकागणैः ॥ ४ ॥

दोषोद्दामदृशं विधाय स विधिस्त्वामङ्ग शङ्काकुलो
वैयर्थ्यं निजसृष्टिकर्मणि निराकर्तुं ससर्जाथ किम् ।
इन्दावङ्कमसूयुतां बुधजने दौरात्म्यमर्थान्विते
भाग्येऽनस्थिरतामकृत्रिमधिया कार्पण्यमत्यूर्जितम् ॥ ५ ॥

---

## ॥ कीचकपञ्चकम् ॥

शिलीमुखमुखक्षतैर्विवरजर्जरः कीचको
नभस्वति यदृच्छया भ्रमति नाम शब्दायते ।
कियानयमनुश्रवः स महतां यशो गायती-
त्यहो अनृतजीविनः कविकुलस्य धाष्टर्यं भुवि ॥ १ ॥

अपुष्पमफलं बहिः प्रकटकण्टकं दुर्भगं
स्तुवन्ति विविधं जनाः किल समुच्छ्रितं केवलम् ।
स नाम मधुरस्वरः स च विकीर्णमुक्ताफलः
स पर्वरुचिरो महान् जगति वंश इत्युत्थितः ॥ २ ॥

मरुद्भिरवहेलया समवधूय सङ्घर्षितः
स्वमेव सकुलं दवज्वलनसात्करोतीह यः ।
कुलेन निवसत्यसौ विततभोगभागित्यभूत्
कथं स्तुतिभिरीडितो जगति नीचकः कीचकः ॥ ३ ॥

सम्भ्रमरचटचटारवविराविणः कण्टकै-
रचिन्त्यपरिसर्पणस्य च निरन्तरं तिष्ठतः ।
धिगार्यगुणचर्वणां धिगपदानमुर्वीतले
भवन्ति हि मधुव्रताः स्वविभवैः प्रसङ्गार्थिनः ॥ ४ ॥

अनीपदुपकारिणः श्रितजनस्य शून्यात्मन-
स्तवात्र निकृतिं परामघविशोधनीं मन्महे ।
वृतीकरणमङ्गशः किल निकृत्य पुण्यद्रुमा-
वलीपरिसरे चिरं प्रगुणपर्वणो गर्विणः ॥ ५ ॥

---

## ॥ पल्वलपञ्चकम् ॥

वृष्टं वारिधरेण वारि विधृतं संगृह्य किञ्चित् त्वया
त्वं वेशन्त न वेत्सि सागरसरित्स्रोतस्सरस्सारणीः ।
तेन स्थानमपामहं महदिति स्वच्छन्दमुत्सिच्यसे
प्रातः प्रस्तुतशौचकर्मणि हितं यं धीवरा वृण्वते ॥ १ ॥

शोषग्रीष्मचिवासरेषु धरणिस्फोटावधिस्त्वद्गतः
पूर्णो वा भव पङ्कदुर्गतमं कस्त्वामुपासीदति ।
स्नातुं त्वां महिषोऽभिगच्छति तटे पोत्री परिक्रीडितुं
पातुं कः खलु तावतापि कियती भ्रातस्तवाहंयुता ॥ २ ॥

मामालिङ्गत सैरिभाः कुरुत भो भेकाः प्रचण्टारवं
मुस्तामुत्खनत क्षितौ मम पुरः कोलाः सफोत्साहलम् ।
वत्सा राजिलका मदङ्कलुठनक्रीडारसे रज्यत
प्रायो वः स्नुहिकर्दमैरसुगमो मत्तद्विपानामहम् ॥ ३ ॥

निस्तन्द्रोर्मिसमाकुलो जलनिधिर्नद्योऽप्यगम्या भुवि
प्रायेण भ्रमिभिर्महाजवतया भीमाश्च ते निर्झराः ।
मुस्ताशाद्वलपिच्छिलं स्थलमथो गाधं पयः पङ्किलं
त्वत्तः पल्वल दर्दुरा वयममी नान्यत्र संप्राप्नुमः ॥ ४ ॥

यः पद्मोत्पलरेणुगन्धि सलिलं सारस्वतं सेवते
नागेन्द्रः स तृषार्दितोऽध्वनि परिश्रान्तो यदि त्वां गतः ।
कस्मादुद्विजसे कुतः कलयसे पङ्कप्रतिक्षेपणं
क्षुद्रं त्वामधिगत्य तावति स तु स्वेनैव निर्यास्यति ॥ ५ ॥

---

## ॥ पन्नगपञ्चकम् ॥

वर्तिरेव तु वर्तन वनभुवि स्वैरो निवासमहो
निर्मुच्यापि निजत्वच फणिपतेस्त्यागस्तथान्यादृश ।
नेला मण्डलबन्धविस्तृतफणाटोपैर्दशोकस्मान
नो चेत् प्राणहर भुवे विषमसौ कस्यास्तु नो वल्लभ ॥ १ ॥

रन्ध्राण्याविशति प्रयाति कुटिल किञ्च द्विजिह्वो भव-
त्युद्दाम गरल बिभर्ति तदपि च्छन्न सिते कञ्चुके ।
नित्य गूढपरोऽनिलाशन इति प्रख्यापयन् स्व प्रन
सत्कन्धे परभोगमेष भुवने हेतु विनाशीविष ॥ २ ॥

भोगिश्चन्दनकाननेषु सुरभे गन्धप्रियाणा भय
नृणा केलपराञ्छया विचरता कालोपमस्य पथि ।
दैवेन प्रतिपादितस्य च निधिद्वारोपरोधी महान्
स्वार्थं कस्तव तत्र तत्र परानिर्हेतुसन्तापने ॥ ३ ॥

दृष्ट्वा स्वैरचरं समुद्भटफटाटोपं क्वचित् प्राणिनः
कम्पन्ते प्रलयं व्रजन्ति तरसा खिद्यन्ति धावन्त्यपि ।
सोऽयं चेदहितुण्डिकेन हृतविषः काकोदरः खेलितो
रथ्यायां मनुजाः सबालवनिताः प्रेक्षाक्षणं कुर्वते ॥ ४ ॥

भोगी यः पृथिवीं बिभर्ति भुजगैर्यैरात्मभूषोचितैः
सन्तुष्टो भगवान् हरो मुररिपोस्तल्पं स यः पन्नगः ।
दाक्षीपुत्रविहारवेश्म विदधे चूडासहस्रोन्मिष-
द्रत्नार्चिर्विशदं च यः स इति चेज्जातिस्तु पापीयसी ॥ ५ ॥

---

## ॥ कुक्कुटपञ्चकम् ॥

सौभाग्यं तव ताम्रचूड जगतो नाम्नैव विख्याप्यते
शक्यं किं चरणायुधस्य भवतः शौर्येऽपि विप्रेक्षितुम्।
त्वद्वाचा समुदेति भानुरिति चेन्नैवाद्भुतं शृण्वतः
प्रत्यक्षं बत कीटकुट्टनपटुः पांसूत्किरः कुक्कुटः ॥ १ ॥

तिर्यग्वक्रितकन्धरः सविकटाटोपं दृशा रक्तया
भित्तेर्मूर्ध्नि चरन् नतोन्नतचलच्चूडः प्रतारारवः ।
श्रद्धत्तां चरणायुधो दिनमणिर्मच्छासनातिक्रम-
त्रासादित्थमुदेत्यसाविति सखे ध्वस्ता कुतस्ते मतिः ॥ २ ॥

बद्धाद्भावसिपुत्रिकां तव गले जान्वोश्च या किङ्किणीं
यत्र त्वामवतारयत्यधिमृधं स्वामी स्वजातीयकैः ।
तत्रोज्जायितुमुच्छिरः परिपतन्नङ्घ्रेरसृग्रूपितैः
शौर्यं कुक्कुट यन्निदर्शयसि भोः कस्तन्न ते श्लाघते॥ ३ ॥

ताम्रो यत्तव शेखरो यदभितः किङ्किलिकिनी कन्धरा
यत्पुच्छस्य विचित्रता खरपरीवाहस्य यद्वक्रता ।
स्थाने खल्ववलिप्यसेऽसि जगतां धातुः कृतिर्वल्लभे-
त्यंहो कुक्कुट जातिमात्रनियतां नावैषि शश्वान्मृतिम् ॥

कष्टं भो बत ताम्रचूड, नयने संमुद्य घूर्णन् किम-
प्यन्तर्घर्घरितं वहन् करपुटे संलीयसे स्वामिनः ।
येन प्रातरुपेतवान्धवजनस्यातिथ्यहेतोर्हठा-
न्निस्त्रिंशेन निकृत्तकण्ठकुहरं क्रूरेण घानिष्यसे ॥ ५ ॥

———

1

## ॥ वयोऽधिरोहनिश्रेणिका ॥

धात्र्युत्सङ्गे निविष्टं वियशमसकृदुद्गारकृन्कन्ददादौ
तोकं मर्त्योऽथ पश्चादुपसदनबलात्काररिन्नः कुमारः ।
ध्यायं ध्यायं युवासौ तदनु मनसिजोत्कण्ठितः कम्बुकण्ठी-
र्भस्त्राप्रायप्रकारः श्वसिति विरचयन् विप्रलम्भप्रलापान् ॥

मानोद्भोऽथ शूरः शपथशतकरः शोभितश्मश्रुकूर्चः
सद्वर्पामर्षपोषैः सपदि विलयिनीं दृष्टि विक्रम्य कीर्तिम् ।
काये स्थौल्यं ततोऽसौ वयसि परिचिनोत्यक्षिण दाक्षिण्यहानं
सारासारावलेहव्यतिकरविशदान् वाचि च प्राज्ञवादान् ॥

आयाते स्थाविरेऽथ कशिमजुषि तनौ पुत्तलीवात्तरेपो
लोके स्फीतायतेऽस्मिन्नगणितगरिमा लीयमानस्तनोऽन्तः ।
कल्ये कौशल्ययोगाद्वयसि समुपचित्याहितं वस्तु भोग्यं
भुञ्जानः प्राप्तताङ्गः प्रणयति मनुजो वासरान् सोपनेत्रः ॥

एवं संक्षीयमाणश्चरममनुविशन् भागमायुष्कलायाः
पश्चान्मर्त्यः किलासौ विगलितदशनः क्षीणचक्षुर्विजिह्वः ।
चीतो भावैरशेषैः पुनरधिगमितः शैशवं स्वं विचित्रं
वृत्तं संहृत्य मृत्योः प्रविशति युगपच्चान्धकारस्य वक्त्रम् ॥

सप्ताङ्के जीवयात्रात्मनि परिगणिते नाटकेऽस्मिन् विचित्रे
संसारोत्तुङ्गरङ्गप्रणिहितनटने स्त्रीपुमाकारभाजः ।
दृष्टा नष्टाः प्रवेशव्यपगमनकृतः सप्तधा क्लृप्तचेष्टा
मर्त्याः शैलूषलीलामनुविदधति हि प्राप्य जन्मावकाशम् ॥

---

## ॥ जीवयात्रा ॥

कालो नित्यं गलति किल नः श्वःपरश्वःप्रकारः
प्राप्तो यावद्भवति दिवसः कल्पिताध्यावसानः ।
गतं यातं दिनमिह जनं मार्गमादिश्य मृत्यो-
राराद्दारान्नयति वितथोद्योगसंमूढबुद्धिम् ॥ १ ॥

जैवी यात्रा खलु जनिमतां नश्वरी दीपरेखा
छाया सेयं क्षणपरिचिता भूतले सञ्चरन्ती ।
शैलूषीयं प्रकटविविधाटोपदृष्टप्रनष्टा
मूर्तिश्शापा विरसविरसा किं च सापेक्षशेषा ॥ २ ॥

---

## ॥ जीवनजुगुप्सा ॥

स्यात् किं नु मे मृतवतः परमित्युपेत-
कातर्य एव कृपणोऽपि न मर्तुमीष्टे ।
अज्ञातरूपपदवीपरिमार्गणाद-
प्यासन्नदुःखसदनं यदमित्यपेत्य ॥ १ ॥

अन्यथा,

कः कालस्योपमर्दं विविधमनुभवन् निष्कृपाणां क्षितिक्षुः
मौर्ख्यं पश्यन् प्रभूणामविनयमथवन्नुन्नतानामसह्यम् ।
नीतिर्ज्ञानप्रभव्यां गतिमपि विमृशन् दैन्यमुर्वीगुणानां
नेच्छेदात्मोपपातं द्रुममरणपदो जीवयात्राप्रवोल्याम् ॥२॥

---

## ॥ आप्तोपदेशः ॥

मा मनोरथमात्रस्य कुरु वाचा प्रपञ्चनम् ।
असम्यग्विनिविष्टं तं क्रियया न च योजय ॥ १ ॥

तावदातिष्ठ सौलभ्यं साधारण्यं न यावता ।
उपश्लिष्य स्वमित्रेषु संमतेषु पुनः पुनः ॥ २ ॥

नापरीक्षितशीलानां तदात्वोदयशोभिनाम् ।
गच्छेः सुहृदुपाख्यानां लालसत्वेन लाल्यताम् ॥ ३ ॥

यत्तो भव यथा वाचा कलहं न प्रवेक्ष्यसि ।
प्रविष्टस्तत् कुरु स्वेन स्वं नियच्छेत् परो यथा ॥ ४ ॥

श्रुतिं देहि परोक्तीनां स्वोक्तीरल्पं परश्रुतौ ।
गृह्णीष्वान्यस्य सिद्धान्तं निगृह्णीष्वात्मनि स्वकम् ॥ ५ ॥

न विलासधिया वेषरचनां नोज्ज्वलामपि ।
निजर्द्धिमनतिक्रान्तां रुचिरामभिरोचय ॥ ६ ॥

यथावद्यद्विवृण्वन्वि परिधानानि पूरुषम् ।
नाधमर्णो भवेः कस्याप्युत्तमर्णोऽथवा भुवि ॥ ७ ॥

स्वयं नश्यदृणं मित्रं नाशयत्येकमेककम् ।
कुण्ठयत्यपि वार्तासु निशितां जागरूकताम् ॥ ८ ॥

सर्वथा न व्यभिचरेदात्मना क्वापि चात्मनः ।
परेषामनभिद्रोहस्ततः स्वेनैव सिध्यति ॥ ९ ॥

---

## ॥ ज्ञानसेनस्य चित्रापीडमहोदयं प्रति लेखः ॥

श्रीमन्मान्य शृणोमि हि प्रियमिदं लोके प्रकाशोन्मुखौ
मन्त्रिव्यूढनिघण्टुलालनरसौ लेखौ भवत्प्रेषितौ ।
तत्रास्मि स्वकृतज्ञतां प्रथयितुं वाचामसामर्थ्यभाक्
त्वादृग्गौरवपात्रताव्यतिकराभावाद्धुताद्यावधि ॥ १ ॥

युष्मत्प्रीतिलवावलेहनतृषा यावत् स्वयं संभृत-
स्फारारोहिमनोरथः परिसरं प्राग्भूयसासेविषि ।
तावद्वोऽलमनादरेण निभृतो मानेन शीलेन च
प्रत्यूढो निरयासिषं निरवधि प्राप्तप्रसङ्गव्ययः ॥ २ ॥

सप्तैते किल हायना विगलिता युष्मत्तिरस्तस्य मे
येषु स्वेन निमज्ज्य शब्दजलधौ किं बोदितैर्भूयसा ।
उत्तीर्णोऽस्मि कृतिप्रकाशनपटुः कस्यापि साक्षाद्वै
वाचापि स्मितलेशयापि च मनाक् प्रोत्साहितो नेतरैः ॥

आर्दो खलु यः प्रभो जलनिधौ मज्जन्तमुत्प्रेक्षते
   निर्व्यापारतया ततश्च कथमप्युत्तीर्णमभ्यर्णभाक् ।
सुस्फीतैरुपचारडम्बरभरैरायासयत्यादरे
   तावत्यश्वरसमहं विमनसं तद्देशकालात्ययात् ॥ ४ ॥

काल्यं मत्कर्मदीक्षाप्रणयि यदि मनाग्दर्शितं सौमनस्यं
   श्लिष्टं तथाभविष्यत् परमिदमधुना मामकस्मान्निरुन्धे ।
यस्मात् स्वेनैव सिद्धः परवदनसमुत्प्रेक्षणे नास्म्यपेक्षी
   स्वोद्धारः स्वेन क्लृप्तो यदि भवतु कुतोऽन्येषु कार्तघ्यदैन्यम्॥

—

## ॥ द्यूतकरनिर्वेदः ॥

महत्प्रणुन्ना व्यचलन् पुरा ये
विभीतका वृक्षविलम्बिबिम्बाः ।
पीठीप्रकीर्णा मदयन्त्यमी मां
मौजावतः सोम इवातिपीतः ॥ १ ॥

न मां निनिन्द प्रचुकोप मह्यं
न क्वापि सा प्रेममयी प्रिया मे ।
अनुव्रतां तामहमक्षहेतो-
र्व्युदस्य यातः कलिना हतोऽस्मि ॥ २ ॥

श्वश्रूर्निरुन्धे निरुणद्धि जाया
नापद्गतं मामनुकम्पतेऽन्यः ।
कः स्यादिवार्घो जरतो हयस्य
कोऽर्थोऽथवा स्यात् कितवेन लोके ॥ ३ ॥

अन्यस्य जायामपरे मृशन्ति
यस्याक्षमूला विपदः प्रसक्ताः ।
जानीमहे नैनामितो नयध्व-
मित्येव वक्ति स्वजनोऽपि तस्य ॥ ४ ॥

न देविताहे सखिभिर्न यास्या-
म्युद्युज्यमानैरिति चिन्तयामि ।
बभ्रुष्वथाक्षेपु कृतारवेषु
तत्रास्म्युपेतः कुलटेव मार्गम् ॥ ५ ॥

यात्यक्षशालां कितवः सशङ्कं
जयो नु वा स्यादिति वेपमानः ।
अक्षास्तमारात् कृपणं विलोभ्य
विपक्षभाग्यान्यभिवर्धयन्ते ॥ ६ ॥

विध्यन्ति तीक्ष्णं क्रुरावनिकृत्याः
परं तपन्तः परितापयन्तः ।
कुमारवद्दत्तहराः किलाक्षाः
जेतृद्रुहो मोहमधूपसिक्ताः ॥ ७ ॥

स्वाधीनधर्मा सवितेव देवो
व्रातस्त्रिपञ्चाशदसावमीषाम् ।
संक्रीडते ते न नमन्ति कस्या-
प्येषां नता भूपतयो भवन्ति ॥ ८ ॥

नीचैः प्रवृत्ता उपरि स्फुरन्ति
हस्तैर्विना हस्तवतो जयन्ति ।
अङ्गारखण्डाः फलके प्रकीर्णा
निर्वाणरूपाः प्रदहन्ति चेतः ॥ ९ ॥

बिभर्ति तापं विधुरस्य जाया
प्रभ्राम्यतः कुत्रचिदस्य माता ।
अस्यन् ऋणी नक्तमुपैति गेहा-
न्यसौ परेषां कितवो धनार्थी ॥ १० ॥

स्त्रियः परेषां स्थितिमन्ति गेहा-
न्यप्येष दृष्ट्वा परितप्यतेऽन्तः ।
बभ्रून् हयान् यो युयुजेऽह्नि पूर्वे
भग्नोऽग्न्यगारे स पपात सायम् ॥

व्रातस्य यो वः प्रथमो बभूव
राजा चमूपो महतो गणस्य ।
दशाङ्गुलीस्तस्य पुरः प्रसार्य
सत्यं ब्रवीम्यस्ति धनं न गुप्तम् ॥ १२ ॥

अक्षैर्न दीव्यात् कृषिकर्म कुर्या-
द्वित्ते रमेत प्रतिपत्तिपूर्वम् ।
तत्रैव गावस्तत एव जाया
तन्मे समाख्यत् सविता दयालुः ॥ १३ ॥

मैत्रीं कुरुध्वं भवत प्रसन्नाः
मा मां प्रधृष्याधिकुरुध्वमक्षाः ।
मन्युः प्रशाम्यत्वपयातु वैर-
मास्तां मदन्यः प्रसितो भवद्भिः ॥ १४ ॥

---

## ॥ साक्षात्कारपञ्चकम् ॥

दिनान्ते दिङ्मोहव्यतिकरवति प्राप्ततमसि
प्रसक्तप्राग्भारैः प्रसृमरपरिच्छिन्नरुचिभिः ।
महर्क्षैर्व्याकीर्णे गगनमपदिश्याद्भुतमयं
प्रपद्ये त्वामीश प्रकटितविभूतिं मदभितः ॥

अविच्छिन्नं राशीभवदुरुतरङ्गाञ्जलिपुटै-
र्मरुन्मार्गं फेनं शिथिलमभिवर्षन्तमुदधिम् ।
अमुं द्वारीकृत्य प्रतिभयमनासाद्यमतटं
प्रपद्ये त्वामीश प्रकटितविभूतिं मदभितः ॥

अनुस्यूते स्फीते निरवधि सरत्स्थिररुचौ
विचित्रे पर्यायप्रथितसुखदुःखोदयवति ।
प्रपञ्चे रोमाञ्चस्फुरिततनुरप्यभिनवे
प्रपद्ये त्वामीश प्रकटितविभूतिं मदभितः ॥

क्वचिद्दिष्ट्या गोष्ठीं त्वदनुभवसौभाग्यपदवी-
  जुषां प्रत्यासन्नः श्रुतिलयपरीवाहविधृतः ।
किमप्यन्तर्लब्ध्वा पुलकिततनुः सास्रनयनः
  प्रपद्ये त्वामीश प्रकटितविभूतिं मदभितः ॥

अहार्याणामाशाव्रततिगहनानां हुतवहं
  प्रशान्तैस्तेजोभिर्वलयितमकस्मादधिगतम् ।
क्वचित् साक्षात्कुर्वन् सुकृतपरिपाकैरभाविनं
  प्रपद्ये त्वामीश प्रकटितविभूतिं मदभितः ॥

---

## ॥ अथाष्टप्रासरामायणसङ्ग्रहस्तवः ॥

देवानां दशकण्ठविक्रममहादावाभिभूतिक्षते-
  र्जीवानुग्रहहेतवे च सहसा स्वावासवीतस्पृहः ।
नो वा स्यात् सुत इत्यहानि नयतो भूवासवस्य स्वयं
  योऽवापात्मजतां ददातु भगवान् मे वाञ्छितान्यच्युतः ॥

धृत्वा दीर्घमनोरथान् व्रतशुचिः स्थित्वा सभार्यश्चिरं
  कृत्वाविष्कृतपायसांशविभवान् कृत्वा निजाङ्के नृपः ।
स त्वाश्लिष्य जहर्ष यान् मनसिजं द्वित्वाश्रयं द्विर्यथा
  स्मृत्वा तान् चतुरश्चतुर्भुजभुजासत्त्वान् जनो मुच्यते ॥

राकेन्दुप्रतिमाननः पितृतपःपाकेन लब्धोदय-
  स्तोके मध्यममातुरार्द्रहृदयो लोके गुणैर्विश्रुतः ।
साकेतान्वयदीपको रघुपतिः स्तोकेतरश्रेयसे
  नौकेव प्रतिगृह्यतां भवमहाशोके निमग्नात्मभिः ॥

गीर्वाणालयरक्षणेषु विहरद्दोर्वासिर्वीराभियो
  दूर्वाश्यामतनुः स कोसलपतेः पूर्वात्मजः सानुजः ।
पूर्वांसिप्रतिनन्दितो मुनिगणाशीर्वादपात्रं गुरोः
  शार्वाद्यस्त्रविधिं कलाश्च कलयन् पार्वाननः पातु नः ॥

क्रूरासृक्पविघातदूषितमगस्याराधियक्षोः पुनः
श्रीरामं मखरक्षणे वरयतो घोरां क्रुधं कुर्वतः ।
यो राज्ञा कुशिकात्मजस्य कथमप्याराधनायार्पितः
स्फारां नः सहलक्ष्मणः स कुरुताद्वीराग्रणीः संपदम् ॥

भर्गस्येव मुनेः सुताविव च यौ निर्गत्य वर्त्मानुगौ
दुर्गप्रान्तरखेदनोदनविधेः सर्गप्रभोः प्रोद्गतम् ।
निर्गर्त्तावधिजग्मतुर्मनुयुगं स्वर्गस्रवन्त्यास्तटे
दुर्गत्यर्णवतारकौ सुकृतिनां वर्गस्य तौ मन्महे ॥

धूलीभिः परिवर्तिताभिरभितः कालीं निशां तन्वतीं
तालीवृक्षसमुन्नतामभिपतद्व्यालीकठोरस्वनाम् ।
नालीकेन निशाचरीं रघुपतिः केलीविसृष्टेन ता-
मालीढां भुवि पातयन् विजयते शालीनताशेवधिः ॥

रक्षोहानिनिदानकार्मुककलाशिक्षोपकर्तुर्गुरोः
पक्षोपाश्रयणेन हिंसितमखप्रक्षोभधुर्याशरः ।
अक्षोदप्रसहिष्णुमोदमयमोद्दक्षो हरिर्नूनमि-
त्यक्षोन्मुद्रणलक्षणैरनुमितो दक्षो विभुः पातु नः ॥

कुल्यापीडशरासदर्शनविधे स्थल्यास्तत प्रस्थितो
वल्याक्रान्तिमुपक्षुताद्भुतकथावल्या प्रसन्नोऽध्वनि ।
कल्याम्भोजनिभाङ्घ्रिरेणुविहृताहल्याघसमार्जन
कल्याण विदधातु वो रघुपति शल्यापहर्ता भुव ॥

क्षुक्षोणीपतिभीतिद परिहृत रक्षोभिरप्युद्धर-
त्रिन्नो काण्डमिव स्म यो दलयति त्र्यक्षोरुबाणासनम् ।
अक्षोभ्यो जयति प्रभुर्नृपसभे प्रक्षोभकृद्दुर्धिया
वक्षोमुकुररत्नगाञ्छितनतु स क्षोणिसभूतया ॥

सद्यो जातरुप शरासदलनाद्विद्योपदेष्टुर्गुरो-
रुद्योग निजशिक्षणाय दधत खद्योतकोटिप्रभम् ।
मद्योन्मत्तमतङ्गभयाद्विपसियोद्यद्योरुगर्वाचल
च्छद्यो यो भृगुनन्दन मनसि मे विद्योतता स प्रभु ॥

सीताविभ्रमदर्शिरत्नविहृति स्फीता मुदो निर्विशन्
पाता कोमलनावृतो रघुपतिर्भूतानुवृन्ये रत ।
ख्याताभिर्गुणसम्पदा प्रकृतिभिर्भ्रातारमपेक्षाकिय-
स्ताववाप्नोति नृपश्रियामभिमुखो पीतादर पातु व ॥

सर्वेषां पुरवासिनां गुणगणैः पर्वेन्दुवन्नन्दनं
दुर्वेलापरिभूतकेकयसुतागर्वेण निर्वासितम् ।
स्वर्वेश्यासुमवृष्टिभिर्गुरुजने निर्वेदतप्ते नम-
स्कुर्वे दाशरथिं व्रजन्तमटवीं दर्वेतरश्रेयसे ॥

रामो लक्ष्मणदर्शिताप्रसरणिर्भूमोचितः सीतया
प्रेमोदारदृगन्तयाप्यनुगतः कामो यथा कान्तया ।
सीमोद्देशमतीत्य कोसलभुवो ग्रामोद्गतैरावृतो
व्यामोहाकुलितैर्जनैर्जलधरश्यामो हृदि द्योतताम् ॥

गङ्गातीरमुपेयिवान् वनचरीभङ्गानाभिज्ञेक्षणा-
सङ्गालीढवपुर्गुणो गुहपरिष्वङ्गामृताप्यायितः ।
तुङ्गाबद्धजटाभरो रघुपतिर्भृङ्गासितैर्मूर्धजै-
रङ्गासाञ्जितवल्कलो मम मनोरङ्गान्तरे खेलतु ॥

पारं जह्नुभुवः पुलिन्दनृपतेर्नौरंहसा जग्मिवान्
धीरं स्निग्धजनान्निवर्त्य विचरन् दूर सदारानुजः ।
नीरन्ध्रद्रुमरुद्धवर्त्मनि वने सारङ्गरम्ये प्रभु-
र्घोरं वः शमयत्वमु भवदवं स्फार विधत्तां शिवम् ॥

भारद्वाजमथाश्रमं परिलसच्चीरप्रसक्तद्रुमं
दूरप्रोद्गतहोमधूमविसरं द्वारप्रकीर्णैणकम् ।
धीरत्नेन सहानुजेन च विशन्नारब्धपूजाविधेः
स्फारप्रस्तुतवन्दनो भगवतः शूरः स वो रक्षतु ॥

प्रातः प्रश्रितवाङ्मुनेरनुमतेनातः पुरः प्रस्थितः
स्रोतः प्राप्य स यामुनं कृतमहापोतः क्षणेनोत्तरन् ।
यातः पुष्पितकाननं दयितया प्रीतः खगव्याकुलं
चेतः क्रामतु चित्रकूटमिव मे नेतः पुनर्भ्रंशयतु ॥

मातुर्दुर्नयतः पितुर्विलपनं भ्रातुः प्रवासं च सं
श्रोतुर्दारुणमाकलय्य निखिलं पातुः पदे निस्पृहः ।
हेतुर्नाहमिति प्रपत्तुमवनीनेतुः प्रयातोऽन्तिकं
केतुः सूर्यकुलस्य सोऽस्तु भरतः स्तोतुर्यशस्संपदे ॥

पश्यन् भ्रातरमार्तमङ्घ्रिसविधप्रस्यन्नटं यं पुरोऽ-
वश्यं राज्यमुपैतुमर्हसि भुवं नश्यच्छुचं पालयितुम् ।
दृश्यस्तावितनुकृन्त्वामिति निर्दिश्य स्वमुपैनं
वश्यः प्रेम्णि ददत्पदत्रयुगलं दृश्यं स्ववत्पातु वः ॥

वन्याचारपरस्य सत्यवचनोपन्यासमालम्ब्य य-
द्धन्यानां प्रथमाद्वाप भरतादन्यादृशोत्साहिनः ।
विन्यासं परिरक्षणाय निखिलायन्या निजांसे धुर-
स्तन्यात्पादुकयोर्युगं भुवि विभोरन्याय्यरीतिक्षतिम् ॥

मन्दीभूतनिजौजसो दिगधिपान् सन्दीप्तशोकान् मुनीन्
बन्दीरप्सरसोऽवितुं च कपटादिन्दीवराक्षीहरम् ।
तं दीनकथनं निहत्य करुणास्यन्दीक्षणोऽरिं विभुः
शं दीर्घं पुनरात्तराज्यभरणानन्दी विधत्तां स वः ॥

लङ्केशासुनिबर्हणं युधि निरातङ्केन्द्रमुख्यस्तुतं
कङ्केऽप्याहितबन्धुभावमधुरं तं केशवान्याकृतिम् ।
सङ्केतावसथीकृतं गुणगुणैः पङ्केरुहाक्षं कुतः
शङ्के नीरधिरोधिनं हृदि सदाहं केतयामि प्रभुम् ॥

तुङ्गश्रीरघुनन्दनाङ्घ्रिनलिनासङ्गस्फुरत्सौभगां
चङ्गभामसरा वहन्तु हृदि भूरङ्गस्थलोल्लासिनः ।
त्वङ्गद्वाग्गतिगौरवेण कविमातङ्गस्य विद्वन्मनो-
भृङ्गप्रीतिनिबन्धिनीमिह महालिङ्गस्य सूक्तिस्रजम् ॥

---

## ॥ आचार्यपञ्चरत्नम् ॥

साम्नां किमस्ति गतिरत्र सुदुर्विदग्धे-
ष्वर्थैः स्थिरा प्रकृतिरेव कथं निगृह्या ।
भेदेन शिक्षणरतेरनृजुः प्रकारो
दण्डं गुरुर्दमयितुं तदिहाप्रहीन्नः ॥ १ ॥

कामं दधातु स मृडः शितिकण्ठशर्व-
भूतेशफालनयनाद्यभिधानवर्गम् ।
लोकान् विनेतुमिह दण्डभृदेक एव
धत्ते गुरुः पशुपतित्वमनन्यगामि ॥ २ ॥

शूली कपालभृदमर्त्यधुनीवतंसः
कृत्तिं दधत्स जगतां सुकृतैः किमेवम् ।
लेशेन वेषपरिवृत्तिवशात्सदण्ड-
रुद्राक्षदामफलशाम्बुकषायवासाः ॥

साधारणे स्मरजयेऽप्यनुभावतार-
तम्यं ब्रवीति खलु साधनसंभ्रमादि ।
वैश्वानराक्षिमहिमा स्तुतिमर्हतीश-
पक्षे गुरुस्तु मनसैव ददाह कामम् ॥

स्मरारिः सर्वज्ञः पशुपतिरसौ यद्यपि वृषं
समारूढः साक्षाद्धर इव शिवासक्तहृदयः ।
न भीमो न स्थाणुर्न च विषमदृष्टिर्न च नटो
न चाप्युग्रः शूली न च न विषकण्ठो मम गुरुः ॥

## ॥ ग्रन्थसमुच्चयपञ्चकम् ॥

पुञ्जीभूतप्रभावं कृतमिव कलिना मूर्खमौखर्यभाजा।
प्रस्तालोकेऽपि लोके क्वचन समुपलभ्यार्यधुर्याभिगुप्तम् ।
विज्ञानज्ञानचर्चारसमुदितविविधश्रीमदुन्मेषपोष-
स्फीतोन्नीतप्रपञ्चं भजत समुदितं भारतीरत्नकोशम् ॥ १ ॥

अत्रामी संवदन्ति श्रुतिषु मधुमुचः पुस्तकन्यस्तरूपा
नृणां सन्दर्शयन्ति व्यपगततिमिरं मार्गमेते महान्तः ।
धिन्वन्त्याज्ञापयन्ति प्रकटमुपदिशन्त्युन्नयन्ति प्रलोभ्य
प्रेक्षावन्तोऽनुवृत्तिं दधति जनिमतां भव्यहेतोर्विभिन्नाम् ॥

अयं सरससाहितीनयसुधाविवर्षी विधुः
पयोनिधिरयं मनीगमकनद्गभीराशयः ।
अयं त्रिदिवनिष्कुटः स्मृतिवशादभीष्टप्रदः
प्रबन्धव्रातविस्तरो विजयते प्रपञ्चोऽपरः ॥ २ ॥

पूतः सङ्घात एष व्यतिकरितदिशां सत्प्रबन्धप्रपञ्चो-
दञ्चद्वैरिञ्चधाम्नाममृतपदजुषामात्मनिष्यन्दशेषः ।
स्वङ्गत्काव्योर्मिमालः प्रकटितनिगमोद्यमशैलेन्द्रकूटो
व्याकीर्णाध्यात्मतत्त्वप्रचुरमणिगणो वर्धते वार्धिकल्पः ॥४॥

नवं सदा स्वर्वनितावयोव-
न्नित्यं धनेशो निधिवच्च पूर्णम् ।
अदृष्टपर्यायमशेषपक्षेपि
ज्ञानं निषेवध्वममुं विगाह्य ॥ ५ ॥

---

## ॥ कालिदासप्रशस्तिः ॥

वागर्थसंप्रयोग-
प्रपञ्चधात्रे नमोऽस्तु बहुयशसे ।
वागर्थप्रतिपत्त्यै
कविकुलककुदाय कालिदासाय ॥ १ ॥

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यैतदुदाहरन्ति
न कालिदासादपरः कवीन्द्रः ॥ २ ॥

प्रभामहत्या शिखयेव दीप-
स्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
श्रीकालिदासस्य गिरा कवीन्दो-
र्जगन्ति पूतानि च भूषितानि ॥ ३ ॥

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च यत्काव्यमनघं
न पर्याप्तां तृप्तिं भजति भजमानः सहृदयः ॥ ४ ॥

यस्य खलु वाङ्मयनटी-
चतुरिमसर्वस्वमनुबुभूपूणाम् ।
बलवदपि शिक्षिताना-
मात्मन्यप्रत्ययं चेतः ॥ ५ ॥

रोमाञ्चिताङ्गाः स्तिमिताश्रुनेत्रा
मिथः प्रसङ्गेषु विसर्पिणीभिः ।
यस्यार्थयुक्तं कविराजशब्दं
शंसन्ति सारस्यकथाभिरार्याः ॥ ६ ॥

काव्यानि यस्य मधुराणि निशम्य सन्त-
स्तद्वातुरीपरिणमत्प्रकृतिप्रबोधाः ।
भावस्थिरं सुरसमखण्डमनुस्मरन्तः
पर्युत्सुका इव भवन्ति किमप्यकाण्डे ॥ ७ ॥

आविर्भूतिरमुष्य नूनमभवद्वाणीविपञ्चीगुणा-
दिन्दोर्वा परिपीडितस्मरधनुःस्यन्दानुबन्धाय वा ।
वेदाभ्यासजडः कथं नु कविताव्यापृत्तकौतूहलो
निर्मातुं प्रभवेद्रसोर्मिलगिरं श्रीकालिदासं विधिः ॥

तां तामवस्थां प्रतिपद्यमानं
स्थितं रसान् व्याप्य नवप्रभेदान् ।
औचित्यमस्यानवधारणीय-
मीदृक्तया कर्तुरियत्तया वा ॥ ९ ॥

माघो मत्तद्विरदगमनो भारविर्भावितार्थः
श्रीकण्ठाख्यो मुरजमधुरः प्राज्यवर्षी स बाणः ।
सौशब्द्येन्दोरुदयशिखरी प्रासशौण्डेषु दण्डी
हन्तैकास्मिन् कचिदपि न ते सौम्य, सादृश्यमस्ति ॥

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती महीयताम् ।
ममापि च प्रभवतु कालिदासवाङ्-
निषेवणात् सहृदयसार्वभौमता ॥ ११ ॥

प्रशस्तिः कालिदासस्य कविहीरमणेरियम् ।
रचिता कविडिम्भेन श्रीमहालिङ्गशर्मणा ॥ १२ ॥

---

## ॥ जार्जपञ्चकम् ॥

उन्मुक्तो निखिलामयैरुपचितः सर्वैः सदाशंसनैः
पृथ्वीभृत्प्रतिपन्नपादपतनः सर्वत्र निर्वारणः ।
दिक्षु प्रोद्धतदुर्जनान्धतमसप्रक्षोभदक्षोदयः
श्रीमान् पञ्चमजार्ज एष महसां राशिर्भुवि द्योतताम् ॥

यामान् पञ्चदिवसस्य निष्प्रतिहतिर्नित्योदयश्रीयुतः
पाताले वसुधातले दिवि च वा यः स्वौजसा दीप्यते ।
साकं यः सुमनोगणैः कुवलयं धत्ते विकासान्वितं
श्रीमान् जार्जमहीश्वरो विजयतां तेजोभिरर्कातिगः ॥

भासो यस्य विलङ्घयन्ति जलधिं क्षुब्धोर्मिमालं बला-
दाक्रामन्ति महीध्रमौलिमुकुटांस्त्वङ्गन्ति तारापथे ।
नौकाधूमरथाम्बरप्रवहणस्वाधीनशक्तित्रयः
श्रीमान् जार्जसहस्रभानुरवनावभ्याहतो दीव्यतु ॥

एकस्मिन् समुदित्वरे द्युतिनिधौ यस्मिन् ग्रहर्क्षत्विषो
गृह्णन्ते पृथिवीभृतो न वचसाप्यन्तेतरे स्वल्पका ।
पाश्चात्योदयमागपि प्रतिनिधिप्रत्यूढपूर्वावन
श्रीमानेष समेघता दिनमणिर्जार्जस्तुरीयोत्तर ॥

दुष्कालव्यतिपङ्कदुर्गतधिया सरम्भदुर्गाटवी-
दावोद्दामसमीरणव्रतचणो धर्मव्यवस्योद्यत ।
आर्ये वर्त्मनि वर्तयन् सुरभिमामार्यान्वयाधिष्ठिता
श्रीमाञ्जार्जनृपोऽनताप्रशमितावाधा समा शाश्वती ॥

---

## ॥ नासिकापञ्चकम् ॥

पातालभूतसुरगर्तसुपर्युदग्रा
घोणा चकास्ति तव मेरुतटीसमाभा ।
या केतनं समुचितं सुमनोऽधिवास-
प्राप्त्यै च यामभिगतौ नयने रवीन्दू ॥ १ ॥

एषा नु सेतुसरणिर्मुखकान्तिपूरे
वक्त्राख्यदेवकुलगोपुरसंहतिर्नु ।
श्वासोरगोचितविहारगृहं नु नाकु-
र्वीणाप्रवालसरला नृप, नासिका ते ॥ २ ॥

अधो विधायाक्षिदिनेशचन्द्रा-
वुज्जृम्भणं विन्ध्यगिरिर्वितन्वन् ।
नासाभिधो भाति तमाखुचूर्ण-
र्यद्रचूपितैः शंसति धातुमत्ताम् ॥ ३ ॥

मरुस्थलं फालदेश: श्मश्रुमुष्टिस्तु काननम् ।
मानदण्डोऽनयोर्मध्ये नासावंशो निवेशितः ॥ ४ ॥

नयविशदधियस्ते नासिकेयं पृथक्कं
प्रथयति समुदग्रा शत्रुमित्राख्यदृष्ट्योः ।
सुरमसिलमभिव्याप्योज्जिहानेव भान्ती
पिशुनयति च कीर्तिं महाकोशेऽप्यमान्तीम् ॥ ५ ॥

---

॥ कौण्डिन्यगीतम् ॥

चिन्ता नास्ति किल, तेषां चिन्ता नास्ति किल ;
परगृहभोजनपरितुष्टानां
नित्यातिथ्योत्सवनिष्ठानाम् ॥ १ ॥

कालत्रयविरतोद्योगानां
किञ्च समेतामितभोगानाम् ॥ २ ॥

गृहमेधिनिमन्त्रणचित्तानां
षड्रसभरिताशनमत्तानाम् ॥ ३ ॥

---

## ॥ सुभाषितानि ॥

चासस्थानेषु सज्जन्तः कुतोऽप्युन्मुदतां गताः ।
इषीकाकुसुमायन्ते दुर्जना मर्मवेधिनः ॥ १ ॥

लोके कूटपराः खलाः कलहिनश्चण्डा असूयालवो
दुर्व्याहारपरापवादनिरता मिथ्याविवादोल्बणाः ।
किं नासन्नधमाः पुरा विकरणाश्चौराः कृतघ्नाश्च वा
सन्त्येते विदिताः स्वरूपविभवैः काले कराले मम ॥२॥

निस्त्रिंशं च मनुष्यं च ग्रहीतुं भुवि जानतः ।
अस्ति साधनसंपत्तिरन्यथात्वे विपर्ययः ॥ ३ ॥

गुणानामगुणीकारैर्दोषाणामुपबृंहणैः ।
परीवादैर्वचःक्रौर्यैर्न शत्रुर्यदि कैः परैः ॥ ४ ॥

मर्मणां गोपनक्लेशैः संमतप्रापणैर्मिथः ।
पुरः पथ्यानुसन्धानैर्न बन्धुर्यदि कैः परैः ॥ ५ ॥

आत्मोत्कर्षपरापवादनिरतं मिथ्याप्रपञ्चं स्फुर-
द्दौर्जन्यं विपवर्षि तुच्छममिताहंकारविस्फूर्जितम् ।
सद्विद्राक्षणमार्षिदं छलशतव्यामोहकार्युद्भटं
न श्लिष्टं न विचारहृद्यमशुभं संभाषणं दुर्हृदाम् ॥

आत्मोत्कर्षपरापवादविधुरं तत्त्वावमर्शि प्रियं
सौजन्यामृतवर्षि पथ्यमकृताहंकारलेशग्रहम् ।
दुर्वाचां दमनं मनोलयकरं गम्भीरमव्याहतं
श्लिष्टं सुष्ठु यथोचितं सुमनसां संभाषणं श्रीकरम् ॥

अन्विष्यन् परमर्म चिन्तयति यद्दुर्यन्त्रणां दुर्जन-
स्तद्वत्रः खलु दुःखसंवरणमप्याक्षिप्य साधुः शुभम् ।
दूरोत्प्रेक्षितमप्रयाचितमनुद्घाट्यैव तावत्पुमा-
वारात् प्रापयतः क्रियां स्वसदृशीं खेदाय मोदाय वा ॥

आक्रान्तौ मदमूर्छनासु च करी लौल्येऽथ मुक्तो नृपः
स्वश्लाघापरिघोषणासु विकटाटोपक्रमे कुक्कुटः ।
रम्याणां च विलोपने वनमृगो व्याघ्रश्च हिंसारुचौ
क्रुद्धः श्वा भषणे भयावहतया व्यालः स लोके खलः ॥

दोषव्यक्तिषु सा खलस्य पटुता येषां गुणारोपणे
जन्तोरापदि घोरसंघः स सुधियो येषां सुखे प्राणिनाम् ।
मूर्खस्योद्धरता दुरुक्तिषु च सा येषामृतोद्घोषणे
शश्वत्तान् विरलाननमामि जगतः क्षेमकरान् सज्जनान् ॥

आनन्दनं शशिनमात्मकलाकलापै-
रविःकलङ्कमुपकल्पयता विधात्रा ।
सर्गक्रियासरसकौशललब्धमूला
मन्ये मनाङ्मलिनिता निजकीर्तिरेव ॥ ११ ॥

आशासु तामसमपोहति सद्गणाना-
मग्रेसरोऽपि च दधाति कलाः समस्ताः ।
व्यक्तं बिभर्ति हृदये च कलङ्कमिन्दुः
सर्वः स्फुटेऽपि निजदोषगणे न विद्वान् ॥ १२ ॥

किमात्मीयं लोकोत्तरमिति न मूढैरभिहितं
किमाशास्यं नृणामरुचिरममार्गाहृतमपि ।
कियत्प्रज्ञाभाजामपि सदसतोर्दर्शनविधा-
यमीग्ध्यं हा लोकं विफलयति मायाविलसितम् ॥

यस्मिन्यन्त्रणदुर्नयव्यवसिताः सुस्निग्धवाचः पुरो
यत्पापव्यवसायिनः प्रकटयन्त्यत्यन्तधर्मादरम् ।
यल्लोकस्तृणसंवृतावटनिभो मिथ्यागुणाडम्बर-
स्वच्छानामि फलैरिदं धृतिहरं कैशोरलीलायितम् ॥

काव्यवद्व्यवहारेऽपि व्यङ्गपरस्यैव प्रधानता ।
रससौजन्ययोः पूर्वमद्य तद्विपरीतयोः ॥ १५ ॥

कलौ कामार्थाभ्यां चरति वरिवस्यन्नविदित-
स्वरूपो धर्मस्तद्द्वितयहृतसाम्राज्यमहिमा ।
स्थिते देहात्मत्वे स्मरणमपवर्गस्य च कुतः
किमाश्चर्यं भिन्ना यदि निगमसेतुव्यवधयः ॥ १६ ॥

स्थानप्रभावः परपीडनाना-
मर्थोपपत्तिः कृपणाशयानाम् ।
दम्भान्वितानां महनीयतेति
त्रीण्यत्र मे मर्मविघट्टनानि ॥ १७ ॥

कृपणेषु धनं खलेषु विद्यां
फणिराजेषु मणिं स्तनौ सुवर्णम् ।
मयशम्बरडम्बरेषु भोगं
गुणिषु ग्लानिमहो विधिर्व्यधत्त ॥ १८ ॥

कस्य केन स्मृतो मन्तुः कः कं विक्रम्य बाधते ।
तथापि नित्यं साक्रोशो दरिद्रे प्रभवन् जनः ॥ १९॥

धर्मध्वजो व्याजविवर्जितेभ्यः
कृतोपकाराच्च कृतघ्नबुद्धिः ।
ऋणी परित्रस्यति चोत्तमर्णात्
सदा कदर्यः स्वगृहेऽतिथिभ्यः ॥ २० ॥

प्रायो मृदौ गुणमवैति गुणं न लोकः
प्राबूत कः खलु शशिन्, जडधीर्जडं त्वाम् ।
आत्मभ्रमं निरवधि त्वमधिश्रितोऽपि
नाविष्करोपि जगतः सकृदेव पूष्णम् ॥ २१ ॥

माधुर्यं स्वदते निपीड्य बहुधा काण्डान् यदिक्षोर्जनो
हेम्नः सारमवैति कर्षणशिलापट्टे निघृष्यैव यत् ।
गन्धे दीपयतेऽगरुं यदपि यत्तक्ष्णोति दीप्त्यै मणिं
तत्पीडामपहाय कुत्रचिदपि प्राप्यो न तत्तद्गुणः ॥२२॥

यत्क्रकचेषु गुणा भवन्ति विदिता लोकैरविश्वासिभि-
स्तानुद्भासयितुं विधिर्गुणवतां विस्तारयत्यापदः ।
ते घामी गुणिनो विमर्दमभितःश्रेयस्करं मन्वते
यत्तेषामितरत्र जीवितफलं स्यादात्मतुष्टिर्यदि ॥२३॥

सीताप्रधर्षणममंस्त निशाचरेन्द्रो
रूपोत्तरेति ऋजुवागिति कौशिकोऽपि ।
क्लेशांस्त्रिशङ्कुतनयस्य ससर्ज दुर्गान्
लोकोत्तरः खलु गुणो बहुदुःखमूलम् ॥ २४ ॥

यथा कवीनां पदबन्धचित्रे-
ष्वेवं जगत्स्रष्टुरपि प्रतीमः ।
अशक्यनिर्भेददृढं निपीड्य
कोष्ठेषु बन्द्धुं व्यसनं मनुष्यान् ॥ २५ ॥

चन्द्रः क्षयी स किल पिङ्गलदृक् कुबेरो
भानोरनूरुररुणः स पुरःसरोऽपि ।
पङ्गुर्यमः सुरपतिः स सहस्रनेत्रो
वेधाः स्वयं विधिवशाल्लुलितैकमूर्धा ॥ २६ ॥

धीराः केचन पर्यवस्थितिजुषः कालप्रवाहे मह-
त्यार्तानामवलम्बनाय ससृजुर्नावो धियोद्द्योतिताः ।
दुर्दैवाम्बु निमज्जिताः कति कति ध्वस्ता विशीर्णाः कति
भ्रष्टाः कन्दपगाहिताः कति परन्त्वद्यापि दिष्ट्या कति ॥

ऋक्षादृक्षमनुव्रजन् हिमकरो वारान् हि पङ्क्तिंशतिं
स्वानंशून् प्रविचीपुरेति निखिलान् मास्येकवारं ततः
अन्यर्तुष्वपि संभृतस्वमहिमा मेघोऽभिनीलां तनुं
वर्षास्वेव समश्नुते फलपरीपाकक्रमस्त्वीदृशः ॥ २८

कस्याभ्यन्तरसारकौतुकि मनः प्रायोऽम्बराडम्बरै-
र्लोको मुह्यति पामरस्त्विति कियत्तद्विस्मयस्यास्पदम्
तादृक्षोऽपि सरित्पतिः श्रियमदात् पीताम्बरं बिभ्रते
क्ष्वेडार्हं किल कृत्तिवाससमसावैक्षिष्ट सर्वेश्वरम् ॥

आशाः सन्त्रुटिता वयो विगलितं भूयः किमाशास्यते
कुत्सामत्सरनीरसो निजजनः सर्वत्र तिक्तं जगत् ।
प्रस्थानं गिरिकन्दराय यदि भोः कल्पः स एवोत्तम-
स्तत्र प्रत्यवतिष्ठते हतमिदं स्वार्थे निविष्टं वपुः ॥३०॥

---

## ॥ कविहृदयम् ॥ (1)

काव्यमूलगृहन्यासः कालिदासेन यः कृतः ।
परिकर्मणि तस्यैव शिल्पिनस्तदनन्तराः ॥ १ ॥

हिमकरकलास्वैराह्लादाः स्फुटन्नवकेतकी-
परिमलगुणोद्दामाः स्थायद्विसाङ्कुरकोमलाः ।
अविरलगलन्माध्वीस्वाद्याश्रमस्कृतकामिनी-
ललितसुभगा धिन्वन्तु त्वां महाकविसूक्तयः ॥ २ ॥

अयं सरससाहितीनवसुधाविवर्षी विधुः
पयोनिधिरयं मणीगणकनद्गभीराशयः ।
अयं गगनवद्विभुः पवनवत्परिभ्राम्यति
प्रपश्यति नभस्सदां गण इवानिशं सत्कविः ॥ ३ ॥

औचित्यनिधिरव्यक्तकुशलो व्यङ्ग्यजीवितः ।
अवधारितसर्वोर्वीसारधीरः कविः कविः ॥ ४ ॥

माधुर्यं पदगुम्फने श्रुतिमतां सारल्यमर्थोदये
सन्दर्भे रसमेदुरत्वमय च व्यङ्ग्यान्तरस्फूर्तयः ।
सर्वाङ्गेष्वपि सौष्ठवं नवनवं काव्यस्य भव्यैर्गुणै-
रेतैर्जीवकलां कृती कविकुले यः कोऽपि योक्तुं क्षमः ॥

विवेक्तुं सन्दर्भं विविधरसपोपक्ष्ममगुं
परिष्कर्तुं दिव्यप्रतिफलजुषा प्रातिभदृशा ।
निबन्द्धुं वाग्गुम्फैः सरसमधुरैस्तत्सुविहितं
शतेषु स्यादेकः कविरथ सहस्रेषु रसिकः ॥ ६ ॥

ताराशीलपरीक्षकः किमखिलो वेलोपलक्षी जनः
सर्वः सिन्धुतरो निमज्जति जले किं मौक्तिकादित्सया ।
वेत्ति स्वर्णशिराधरां किमु धरां सर्वोऽपि तामाश्रितः
कः काव्यं न पठत्यमुष्य हृदयग्राही स कोऽप्यर्बुदे ॥

अम्लं येन विकार्यते सुमधुरं येनेक्षवो वेणवो
नागेन्द्रा अपि शुक्तयोऽपि च चिरान्मुक्ताफलं बिभ्रति ।
इङ्गाला अपि येन निर्झरपयःपीडागमाद्वज्रतां
देवत्वं नरकीटकोऽपि भजते पाकाय तस्मै नमः ॥

पारं गतो भव कलास्वखिलास्वपीति
सानुग्रहं पितृपितामहपूज्यपादाः ।
मामस्पृशन्निगमबोधवदान्यमुद्रा-
धन्येन पाणिकमलेन शिशुं शयानम् ॥ ९ ॥

## ॥ कविहृदयम् ॥ (2)

कस्यार्थं कवितारसेन तृषित कश्चित् किमेन पिबे
दुरासेवनत कृश किमपर किं सेवितेनैव वा ।
गन्धर्वालयगोपुरप्रगणना सेय स्थलीशायिभि
स्वस्थैर्वा क्रियतामल परिकरै कृत्याकुलाना पुर ॥ १ ॥

अभ्यर्हणासु दयतेऽनृतमास्तृणोति
नरकन्धसहविषु लब्धशनानि भुङ्क्ते ।
वातप्रमीरिव जवी भुवि नम्भ्रमीति
करत निरुध्य कविता श्रवसि प्रसिञ्चेत् ॥ २ ॥

नार्वाचीनगुणाभिमर्शसरस प्राय प्रधानो जन
काव्य काल्हरप्रपातसहृमि नास्ते कुत प्रत्यय ।
भूयोजन्मनि निष्ठितेऽपि यशसि स्यात् प्रत्यभिज्ञा नु वा
व्यर्थं मत्कविते विक्षोभयसि मा सारस्यमातन्वती ॥३॥

मामह्राय सरस्वतीप्रणयिनं क्रोधादतिक्रामति
श्रीरुन्मथ्य हसन्तिकां प्रतिगृहं व्यङ्क्तुं व्यलीकं मयि।
आर्या मेऽथ पितृष्वसा विदशनैराप्तोपदेशक्रमैः
प्रेयस्यामशने जनश्रुतिषु च प्रम्लापयत्यादरम् ॥ ४ ॥

मधुरेव सवर्तुषु प्रसूने-
ष्वपि चूतः पिक, पञ्चमं स्वरेषु।
कविरस्मि च सारदृक् प्रपञ्चे
परपुष्टौ विधिरीर्ष्यितो व्यधात्त्वां ॥ ५ ॥

व्यङ्ग्यामृतं पिबति खादति शब्दराशिं
गृह्णात्यलंकृतिशतं सरसोपदंशम्।
सन्दर्भसारमवलेढि कविः प्रपञ्चे
स्वर्गे महान् भुवि परिभ्रमति क्षुधार्तः ॥ ६ ॥

अम्भो यद्यप्रतिहतं भवति प्रवृद्ध-
मङ्गारराशिरनिलोपहतः समिन्धे।
उन्मेषमुज्ज्वलधियामुपरोद्धुमेते
शक्ष्यन्ति किं भवपरिश्रमजा विपाकाः ॥ ७ ॥

## ॥ कविहृदयम् ॥ (3)

कविरात्मानमुद्धृत्य भवभूपप्रतापितम् ।
द्रवीभूतमुपादत्ते काव्यवर्त्मनि सान्द्रितम् ॥ १ ॥

मनोबुद्धीन्द्रियग्रामचिन्मात्रव्यवहारवत् ।
तत्काव्यं भिद्यते नाना कर्तृताद्रूप्यमुद्रितम् ॥ २ ॥

काव्यस्यात्मा कवेरात्मा प्रतिबिम्बाश्रयैर्नयैः ।
स यादृशस्तादृशोऽसौ तदर्थेषु च सा भिदा ॥ ३ ॥

काव्ये सहृदयाः कामं कवेरात्मनि भावुकाः ।
तस्य रस्यत्वमेवात्र पृथक्केनोपपाद्यते ॥ ४ ॥

अनुप्रविशति स्वेच्छावशात् संसिद्धवाक्पतिः ।
शरीरं वाङ्मयाभिख्यं कल्पान्तेष्वप्यभङ्गुरम् ॥ ५ ॥

## ॥ कविहृदयम् ॥ (4)

काले ह्यर्वाचीनपरे प्रतनादरमन्थरे ।
कीदृशी संस्कृता वाणी कीदृशोऽभिनवः कविः ॥ १ ॥

विरलेष्वपि गीर्वाणवाणीसौन्दर्यसाक्षिषु ।
कृतात्मा कोऽपि कुत्रापि भवेदित्येष नः श्रमः ॥ २ ॥

अर्हदर्हणयोर्लोके समवायो न दृश्यते ।
तथापि विपुलाशंसः स स किन्न प्रवर्तते ॥ ३ ॥

अनीदृशेषु रतिमात्रात्र रज्येत कर्हिचित् ।
ईदृशप्रणयी नाम तुष्येद्गुणलवैरपि ॥ ४ ॥

इह कौतुकिनां खलात्मनां
न तु दृष्टिं प्रतिपेद्धुमस्म्यलम् ।
रसभावविदां परं कृते-
र्नयनाप्यायनमर्थ्यते मया ॥ ५ ॥

यस्याराधनमात्रेणाप्यन्ततो मम निर्वृतिः ।
कलावल्लायिने तस्मै कस्मैचन नमो नमः ॥ ६ ॥

---

इति श्रीमद्भरद्वाजकुलतिलकश्रीमदप्पय्यदीक्षितेन्द्रवंश-
मुक्ताफलानां महामहोपाध्याय राजुशास्त्र्याख्या-
विख्यात श्रीत्यागराजमखिराजानां प्रपौत्रेण,
महोपदेशक-शास्त्ररत्नाकरादि-बिरुदाङ्कित-
श्रीयज्ञस्वामिशास्त्रिवर्याणामात्मजेन,
श्रीमन्महालिङ्गकविना
प्रणीतायां काव्यकिङ्किणीमालायां
प्रथमो गुम्फः समाप्तः

---

॥ शुभमस्तु ॥



## APPENDIX A

### POEMS WHICH ARE TRANSLATIONS.

प्रेयसीस्मृतिः [P 24] Shakespeare's Sonnet No 29.

विरहिवैक्लव्यम् [P 26] Shakespeare's Sonnet No 73

प्रभातवेला [P 37] Wordsworth's Sonnet beginning with, "Earth has nothing more fair to show"

अम्बुवाहः [P 40] Shelley's "The Cloud"

वयोऽधिरोहनिश्रेणिका [P 61] Shakespeare's **As You Like It** Act II, sc vii, ll 139 to 166

जीवयात्रा [P 63] Shakespeare's **Macbeth** Act V, sc v, ll 19 to 28

जीवनजुगुप्सा [P 63] Shakespeare's **Hamlet** Act III, sc i, ll 66 to 82.

आप्तोपदेशः [P 64] Shakespeare's **Hamlet** Act I, sc. iii ll 59 to 80

जानसनस्य चिस्टर्फील्डमहोदयं प्रति लेखः [P 65] Dr Johnson's Letter to Lord Chesterfield.

द्यूतकरनिर्वेदः [P 67] The Rgveda Mandala X, Hymn 34



## APPENDIX B

## A NOTE ON THE SONG-POEMS

Page 3 गणेशगीतम् Rāga "Ǐ<amanōharı", Tāla: "Ādı" Metre odd quarters contain 10 syllables and even quarters 7 syllables May be scanned by Ganas thus:—स. न. ज. ल. / स. स. ग. } The yatı falls after the 5th syllable ın the odd quarters

Pages 4—5. पण्नुरभूषणम् Rāga "Punnāgavarālı" Tāla: "Ādı" Several other straıns also will be found suıtable. Metre. Bhujanga-prayāta

Page 6, शिवपञ्चचामरम् Rāga "Jañjūtı" ; Tāla: "Rūpakam" Metre: पञ्चचामरम्. Each quarter contains 18 syllables and the yatı falls after the 10th syllable. May be scanned by Ganas thus - र. स. ज. ज. भ. र.

Page 6 शिवनमस्कारः Rāga· "Kamās", Tāla: "Rūpakam" Metre there are 15 syllables ın a half, among which every odd syllable ıs long and every even syllable ıs short

Page 7 शिवगीतम् Rāga· "Jañjūtı" and "Śri-rāga," Tāla "Ādı" Metre the first three quarters have 11 syllables each, with a break after the seventh, and the fourth has only 4 syllables (In stanza 4, line 2, read भिताङ्क instead of भितोत्पन्न)

Page 8 शम्भुस्तुतिः Raga Hindustāni tune, (like Dara Tillana) Tāla " Adi "

Page 9 शारदागीतम् Raga " Sindhu Bhairavi " or "Pilu", Tāla "Ādi"

Page 10 जन्मभूमिप्रशस्ति: Raga "Jañjūti", "Darbar", "Asaveri", "Nilambari", "Byag", "Kamas", etc Tala 'Adi" Metre each quarter contains 8 syllables, the first two are always short

Pages 11 12 नायिकाप्रणय: Rāga "Kamas", Tala "Triputa" May be sung in 'Yadukula-Kāmbhoji" also

Pages 22 23 जलदमालिनी Rāga "Pilu", Tāla "Rūpakam' May be sung in 'Sindhu-Bhairavi," Sahāna, Atana, etc, Metre the odd quarters contain 12 syllables, and even quarters 6 syllables The Gana scheme may be taken to be generally भ न भ भ / त स

But in Stanza V, in the second half it is found to be भ न त न / त स

Pages 27 29 राघवविलाप Raga "Pilu", Tala "Ādi' May be sung in several other tunes also Metre the odd quarters contain 16 Matras and the even quarters 14 Matras

Page 30 श्रीकृष्णलीलागीतम् Raga "Sindhu Bhairavi", Tala 'Cap'

Pages 31-34, स्थाणुपरिदेवनम् Rāga: "Nādanāma-kriyā"; Tāla: "Rūpakam." May be *sung in* several other tunes also. Metre: the odd quarters contain 8 syllables, and the even, 11 syllables falling into the Gaṇa scheme:- त, त, ग, ग, त, त, त, ग, ग,

Pages 38-39, जलदागमः This is a manipulation of the above-defined metre with a provision for five feet. May be *sung in* "Kedāra"; "Rūpakam."

Page 89. कौण्डिन्यगीतम् Rāga: "Navaıos"; Tāla: "Ādi."

## APPENDIX C

## PATRONS AND PARTICULARS OF THEIR CONTRIBUTIONS

His Holiness the Jagadguru Śri Śankaracarya
nakoti Pitha Camp at

Contributions to the *[illegible]* proposed to be floated will be acknowledged with thanks

12-3 1934 Y. Mahalinga Sastri

## APPENDIX D

## WORKS THE PUBLICATION OF WHICH WILL BE TAKEN UP NEXT:

1. व्याजोक्तिरत्नावली A series of Anyāpadeśa verses with Introduction, Translation and Notes in English.

2 वनलता A lyrical poem, with a love theme, in five cantos

3. प्रतिराजसूयम् A drama in seven Acts with an Introduction

4 मणिमाला Longer poems—a collection

5 पुष्पोपहारः A collection of devotional poems.